जातकालंकार of गणेशदैवज्ञ with the Commentary of हरभानु शुक्ल - Edited and published by गोवर्धनराम at ब्रह्मानन्द प्रेस. Loose leaves edn., Benares, n.d.

1534

25

54

श्रीगणेशायनमः॥ ॥ वस्वर्णब्रह्मविद्यापरिचयचतुरंश्रीशुकंव्यासपुत्रं नत्वाचार्यंमुनीनांहरि
पदकमलेप्रेमविश्रामभाजां ॥ स्विष्टेष्टंस्वेष्टदेवंश्रुतिसमधिगतंमाधवंभावयित्वा भावैरुद्धाव्यते
श्रीमंगलमूर्तयेनमः॥ ॥सानंदंप्रणिपत्यसिद्धिसदनंलम्बोदरंभारतीं सूर्यादिग्र
हमंडलंनिजगुरुंभक्त्याहृदब्जेस्थितं ॥ येषामंघ्रिसरोरुहस्मरणतोनानाविधाःसि
द्धयःसिद्धिंयांतिलघुप्रयांतिविलयंप्रत्यूहशैलव्रजाः ॥ १ ॥
सद्भावाकलितंपदार्थललितंयोगांगलीलार्चितंश्रीमद्भागवतंशुकास्यगलितंय
च्छ्रीधरस्वामिना ॥ सुव्यक्तंक्रियतेगणेशकविनागाथोक्तितज्जातकंवृत्तस्रग्धरया
जनादिसुफलंज्योतिर्विदांजीवनम् ॥ २ ॥
स्मैप्रवरमतिमुदेजातकालंकृतश्रीः ॥ १॥ अथज्योतिर्वित्तिलकःछंदोलंकृतिकाव्यरचनानिपुणः
श्रीगणेशकविः श्रीशुकजातकानुरोधिजातकालंकारनामकग्रंथंचिकीर्षुस्तदादौनिर्विघ्नपारिसमा

त्यर्थंशिष्टाचारक्रमगतंभगवाद्विभूतिभूतगुरुगणेशभारतीकर्मप्रणिपातपरंवस्तुनिर्देशात्मकंमंग
लमाचरातिद्वाभ्यांशार्दूलविक्रीडिताभ्यां सानंदमिति सद्भावाकलितामितिच गणेशनाम्नाग्रंथक
रणकुशलेनमयातज्जातकंवृत्तस्रग्धरयाप्रव्यक्तंक्रियतेस्पष्टार्थंयथास्यात्तथाविधीयतेइत्यर्थःकिंकृ
त्वा भक्त्यातान्सिद्धिसदनंनत्वानमस्कृत्यतान् किंविधान्येषामंघ्रिसरोरुहस्मरणतः नानावि
धाःअनेकविधाः सिद्धयःकार्यसिद्धयः सिद्धिंपूर्णतांयातिप्रत्यूहशैलव्रजाः विघ्नपर्वतसमूहाः वि
घ्नोंतरायः प्रत्यूहइत्यमरः व्रजोगोष्ठाध्ववृंदेषुइत्यमरः लघुशीघ्रंविलयंयांतिनश्यंति लघुक्षिप्रमरं
द्रुतमित्यमरःलघ्वितिपदंशीघ्रतावाचकंदेहलीदीपकन्यायेनोभयत्रान्वेतितान्कान्तदाह सिद्धि
सदनं सिद्धिर्लक्ष्मीःतस्याःसदनंगृहंनिवासस्थानमितियावत् श्रीनिवासइत्यर्थः त्वंसिद्धिस्त्वं
स्वधास्वाहेत्यादिलक्ष्मीस्तुत्यारंभेसिद्धिशब्दस्यलक्ष्म्यांप्रयुक्तत्वात् सिद्धिर्लक्ष्मीरितिनित्यावि
कल्पोर्थः कीदृशंसिद्धिसदनंसानंदंआनंदेनसहितंब्रह्मणआनंदः आनंदंब्रह्मणोविद्वानितिश्रुतेः
सानंदमितिविशेषणपदंभगवतोन्यत्रनोपपद्यते ततोन्यदत्तमितिश्रुत्वाब्रह्माणामित्यत्रार्त्तवोपदे

शात् हृदब्जेस्थितंहृदयकमलवासिनं सर्वस्यचाहंहृदिसन्निविष्टइतिभगवद्वचनात् भक्त्याप्री
तिपूर्वकानुस्मृत्या गुरुंश्रीमच्छिवाख्यंलंबोदरंविनायकं भारतींसरस्वतीं सूर्यादिग्रहमंडलं रव्या
दीनांग्रहाणांमंडलंसमूहंच प्रणिपत्यनमस्कृत्य शुकास्यगलितं शुकमुनिमुखात् भक्तिभूतंगलि
तं गाथोक्ति गाथानांश्लोकविधुराणांउक्तिर्व्यवहारः यस्मिन्तथाभूतं कथंव्यक्तंक्रियतेयथाशु
कास्यात् गलितंश्रीमद्भागवतंमहापुराणंश्रीधरस्वामिनाव्यक्तंकृतमित्यध्याहारः कथंभूतंभाग
वतंजातकंच सद्भावाकलितंसन्प्रशस्तोभावोविष्णुभक्तिः तेनाकलितंविशिष्टंजातकपक्षेसद्भा
वैस्तन्वादिद्वादशभावैस्तात्पर्यैर्वाविशिष्टं पदार्थं ललितं पदार्थैः परमभक्त्युद्द्योतकैः श्रवणकी
र्तनादिभिः ललितंरुचिरंजातकपक्षेपदार्थैः सानंदसदनादिभिर्मनोहरं योगांगलीलार्चितंयोगो
भक्तियोगस्तस्यांगानियमानियमप्राणायामप्रत्यहारध्यानधारणासमाधयःतेषांलीलाउपदेशवि
शेषास्ताभिरर्चितंमाहितं जातकपक्षेयोगांगानिग्रहभावादीनि तेषांलीलायोग्यत्वेनघटनाविशेष
स्ताभिरर्चितंप्रशस्तामित्यर्थः ज्योतिर्विदांजीवनंज्योतिः परमात्मानारायणः परंज्योतिरितिश्रु

तेः तद्विदांब्रह्मविदांजीवनंकालक्षेपयोग्यं जातकपक्षेज्योतिर्विदांगणकानांजीविकाप्रदत्वाज्जी
बनमित्यर्थः वृत्तस्रग्धरयास्रग्धरावृत्तैरित्यर्थः जात्यभिप्रायेणैकवचनोक्तिः तस्यलक्षणंचत्वारो
यत्रवर्णाः प्रथममित्यादि ॥ १ ॥ २ ॥ ननुश्रीधरस्वामिवद्भवतापिशुकजातकव्याख्यानेकर्त
व्येग्रंथारंभोनेोचितस्तत्राहयत्पूर्वमिति गणेशनामाहंश्रीमच्छिवानुज्ञयावेदशास्त्रसंपन्नशिवना

यत्पूर्वंपरमंशुकास्यगलितंसज्जातकंफक्किकारूपंगूढतमंतदेवविशदंकुर्वेगणेशो
स्म्यहं ॥ दैवज्ञःसुतरांयशःसुखमतिःश्रीहर्षदंस्रग्धरावृत्तैश्चारुनृणांशुभायनप
दंश्रीमच्छिवानुज्ञया ॥ ३ ॥

म्नः गुरोराज्ञ
यातत्प्रीत्यर्थमितिभावः पूर्वभावकालेशुकास्यगलितंछंदोरहितत्वात्फक्किकारूपंगूढतमंअतिश
येनगहनंनतुविशदं परमंसारार्थनिरूपणेनोत्कृष्टं यज्जातकं तदेवस्रग्धरावृत्तैश्चारुरुचिरंविशदं
कुर्वे फक्किकारूपस्यगूढतमस्यविशदीकरणंश्लोकैरेवोचितमित्याशयः कथंभूतोगणेशः दैवज्ञो

ऽदृष्टवेत्ता कर्तव्यग्रंथभावितवार्तादर्शीतिगूढभावः सुतरांयशः सुखमतिः अतिशयितकीर्तिज
न्यसुखेमतिर्यस्यसः प्रयोजनगर्भमिदंविशेषणं यशोऽन्यसुखार्थमितिभावः कीदृशंतत् श्रीहर्ष
दंश्रियंहर्षंचददातितत् शुभायनपदंशुभायनानांशुभजातकानांआनंदसिद्धिसदनादीनांपदंस्था
नं ॥ ३ ॥ ननुसत्कवीनांहर्षप्रदंत्वदीयंजातकं नस्यादित्याह भूयांसइति भूमौयद्यपिकाव्य
गुंफेगद्यचरनायांनिजमतिरचनाशालिनः निजमत्याकाव्यरचनातयाशालंतेतेभूयांसःनिपुणाः

भूयांसःसंतिभूमौनिजमतिरचनाशालिनःकाव्यगुंफेसंख्यावंतस्तथापिप्रचुरपर



संख्यावंतः कवयःसंति तथापिप्रचुरपरगुणानंदलीलांभजंतेप्रकृष्टपरगुणानुभवजन्यानंदलीलां
उद्वहंति नोपेक्षंतइत्यर्थः परगुणपरमाणून्पर्वतीकृत्यनित्यंनिजहृदिविकसंतः संतिसंतः कियं
तइत्युक्तत्वात्कृत्यानुपरगुणानुभवजन्यप्रमोदएवतेषांलीलेतिभावःउक्तमर्थमर्थांतरन्यासेनद्रढ
यतिचंचद्गांभीर्यंचपद्माचाविबुधाविटपीचचंचद्गांभीर्यपद्माविबुधविटपिनः चंचंतोद्योतमानाः गां

भीर्यादयश्चएतेषांजन्मसंप्राप्तिभूतः। आश्रयोपिरत्नधामापिरत्नगृहमपिसरस्वान्समुद्रः स्वकी
यांमर्यादांस्थितिंनत्यजति तथैवकवयोपिप्रमोदेरान्नितिभावः गांभीर्यंनिश्चलतापद्मालक्ष्मीः विबु
धविटपीपारिजातः अत्ररत्नधामेतिपदंचिंत्यंधामशब्दस्यनपुंसकलिंगत्वात् अत्रतत्पुरुषसमासे

गुणानंदलीलांभजंते ॥ चंचद्गांभीर्यपद्माविबुधविटपिनांजन्मसंप्राप्तिभूतोमर्या
दांनस्वकीयांत्यजतिकिलमहान्रत्नधामासरस्वान् ॥ ४ ॥
देहंद्रव्यपराक्रमौसुखसुतौशत्रुःकलत्रंमृतिर्भाग्यंराज्यपदंक्रमेणगदितालाभव्य

परवल्लिंगंद्वंद्वतत्पुरुषयोरित्यनुशासनेनरत्नधामेतिनपुंसकांतत्वस्यादंतत्वात् अतोरत्नधामाप्युद
न्वानितिपाठःसमीचीनः ॥ ४ ॥ अथतन्वादीनांसामान्यविशेषसंज्ञाःकथ्यते यावदध्यायंआदौ
तावल्लग्नादीनांदेहादिसंज्ञाः तेषांसर्वेषांभावसंज्ञांचशार्दूलविक्रीडितेनाह देहंद्रव्यपराक्रमावि
ति लग्नतःल्यब्लोपेपंचमीलग्नमारभ्यक्रमेणदेहादयोद्वादशभावाः गदिताःउक्तास्तत्रलग्नंदेहोदे

हभावः द्वितीयतृतीयोद्रव्यपराक्रमौ द्रव्यपराक्रमभावौ चतुर्थपंचमौभावौसुखसुतौषष्ठःशत्रुः सप्तमभावः कलत्रंअष्टमोमृतिः नवमोभाग्यंदशमंराज्यपदं एकादशद्वादशौलाभव्ययौ लाभव्ययनामकौ तत्रतेषुदेहिनांदेहंसौख्यशरणंसुखाश्रयंमतंअतोबुधैः ज्योतिर्विद्भिःस्व स्माद्देहादेवलग्नभावादेवशुभाशुभाख्यफलजोनिर्णयोवक्ष्माणप्रकारेणकार्यः ॥ ५ ॥ लग्नमिति

यौलग्नतः ॥ भावाद्वादशतत्रसौख्यशरणंदेहंमतंदेहिनांतस्मादेवशुभाशुभाख्यफ लजःकार्योबुधैर्निर्णयः ॥ ५ ॥

लग्नंमूर्तिस्तथांगंतनुरुदयवपुःकल्पमाद्यंततःस्वंकोशार्थाख्यंकुटुंबंधनमथसहजं

लग्नंमूर्त्यादिशब्दवाच्यमितिमुनयःऊचुरितितृतीयेनान्वयःमूर्तिःअंगंतनुः उदयंवपुःकल्पमिति समाहारः उदयः वपुः कल्पमाद्यंतन्वादयोलग्नपर्यायाः इतिप्रथमभवः ततोनंतरंधनंस्वंकोशा र्थाख्यंकोशश्चार्थश्चकोशार्थौआख्यायस्यसतथातत्तथोक्तंधनंस्वादिसंज्ञमूचुरित्यन्वयः एवमग्रे

पि सहजंभ्रातृदुश्चिक्यसंज्ञंतृतीयभावः अंबापातालतुर्यंहिबुकगृहसुहृद्वाहनंयानसंज्ञंयानना
मकं एवंबंध्वाख्यंबंधुसंज्ञं अंबुनीरंजलंएतेचतुर्थभावस्यपर्यायाइतिभावः अथतनयंबुद्धिविद्या
त्मजाख्यंवाक्स्थानंपंचममित्याग्रिमेणसंबंधःस्यात्पंचमभावस्यैतेपर्यायाः ॥ ६ ॥ वाक्स्थानमि

भ्रातृदुश्चिक्यसंज्ञं ॥ अंबापातालतुर्यंहिबुकगृहसुहृद्वाहनंयानसंज्ञंबंध्वाख्यंचां
बुनीरंजलमथतनयंबुद्धिविद्यात्मजाख्यं ॥ ६ ॥ ॥ ७ ॥ ॥ ७ ॥
वाक्स्थानंपंचमंस्यात्तनुजमथरिपुद्वेषवैरिक्षताख्यं षष्ठंजामित्रमस्तंस्मरमदनम
दद्यूनकामाभिधानम् ॥ रंध्रायुश्छिद्रयाम्यंनिधनलयपदंचाष्टमंमृत्युरन्यद्दुर्वाख्यं

ति अथषष्ठंरिपुद्वेषवैरिक्षताख्यंऊचुः रिपुद्वेषवैरिक्षतनामकमित्यर्थः अथसप्तमंजामित्रमस्तस्मर
मदनमदद्यूनकामाभिधानंऊचुः सप्तमंजामित्रास्तस्मरमदनादिनामकमित्यर्थः अथाष्टमंरंध्रायु

आद्यमिति इहशास्त्रेबुधैः आद्यंचतुर्थंसप्तमंदशमंकेंद्रमुक्तंपरतः कंटकाख्यंचतुष्टयंचस्यात् चतुष्टयमेवचातुष्टयंपंचमंनवमंत्रिकोणमुक्तं मृत्युलाभात्मजार्थंअष्टममेकादशंपंचमंद्वितीयपणफरमुक्तंनवमंद्वादशंषष्टंसहजंआपोक्लिमसंज्ञंउदितवैरिरिःफातकाख्यंषष्टद्वादशाष्टमत्रिकमुक्तम् ॥ ६

आद्यंतुर्यंकलत्रंदशममिहबुधैः केंद्रमुक्तंत्रिकोणंपुत्रंधर्माख्यमुक्तंपणफरमुदितंमृत्युलाभात्मजार्थं ॥ धर्मंचापोक्लिमाख्यंव्ययरिपुसहजंकंटकाख्यंहिकेंद्रंचैतच्चातुष्टयंस्यात्त्रिकमिहगदितंवैरिरिःफांतकाख्यं ॥ ६ ॥ ॥ छ ॥ ॥ छ ॥

चंद्रेज्यदितिजारवींदुतनयोगुर्विंदुसुर्याःक्रमाच्छुक्राकौरविचंद्रभूमितनयाज्ञार्कीसि

अथमित्रशत्रूनेकेनशार्दूलविक्रीडितेनाहचंद्रेति चंद्रेज्यादितिजादयःअर्कादेः सुहृदः बुधादयसमाः अन्येवैरिणःमताः मुनिभिरितिशेषः सूर्यस्यचंद्रेज्यदितिजाः सुहृदःमित्राणि बुधःसमःरविबुधौचंद्रस्यामित्रेसर्वेअन्येसमाः गुर्विंदुसूर्याः भौमस्यामित्राणिशुक्रशनीसमौबुधः शत्रुःशुक्र

शिछद्रनिधनलग्नपदंमृत्युं अष्टमरंध्रादिनामकामित्यूचुः अतोनवममिहशास्त्रेगुर्वाख्यं धर्मसंज्ञं शुभंतपोमार्गसंज्ञंऊचुः ॥ ७॥ ॥ तातेति अथतनोर्दशमंतातादिनामकमूचुरिति आज्ञामानंक र्मआस्पदंगगनंनभोव्योममेषूरणंमध्यमंव्यापारमूचुरितिस्फुटाव्यक्तिः अथभवंएकादशं आग

धर्मसंज्ञंनवममिहशुभंस्यात्तपोमार्गसंज्ञं ॥ ७ ॥ ताताज्ञामानकर्मास्पदगगनन भोव्योममेषूरणाख्यं मध्यंव्यापारमूचुर्दशममथभवंचागमंप्राप्तिमायम् ॥ इत्थं प्रांत्यांतिमाख्यंमुनयइहततोद्वादशंरिःफमाहुर्ग्राह्यंबुद्ध्वाप्रवीणैर्यदधिकममुतःसं ज्ञयातस्यतच्च ॥ ८ ॥

संप्राप्तिं आयमूचुः इत्थमुक्तंततोद्वादशंप्रांत्यांतिमाख्यंप्रांत्यनामकंअंतिमंरिःफंचाहुः यदमुतः प्रोक्तात्पर्यायसमुदायात् अधिकंदृश्यते तस्यतस्ययन्नामोक्तंनामसंज्ञायांपर्यायंबुद्ध्वातत्तुल्या र्थंशुद्धंग्राह्यं यथा वित्तशब्देनतुल्यार्थेधनंसहोत्थेनसहजभावोग्राह्यइति ॥ ८ ॥

सूर्योबुधस्यमित्रेभौमगुरुशनयः समाः चद्रंः शत्रुः रविचंद्रभौमाः गुरोर्मित्राणि शनिःसमःबु धशुक्रौशत्रू बुधशनीशुक्रस्यमित्रे कुजगुरूसमौ रविचंद्रौशत्रू सितज्ञौशनेर्मित्रेगुरुः समः रवींदुभौमाः शत्रवः ॥ १० ॥ अथदृष्टिःपृथ्वीवृत्तेनाह तृतीयेति तृतीयदशमादिषु चरणवृद्धितः

तज्ज्ञौमताः॥अर्कादेःसुहृदःसमाअथबुधःसर्वेहिशुक्रार्कजौभौमाचार्ययमायमःकुजगुरूपूज्यःपरेवैरिणः ॥१०॥ तृतीयदशमेग्रहोनवमपंचमेष्टांबुनीक्रमाच्चरणवृद्धितः स्मरगृहंततःपश्याति॥ कुजःसितबुधौशशीरविबुधौसितक्ष्मासुतौगुरुर्यमशनीगुरुर्भवनपाइमेमेषतः ॥ ११ ॥

पश्यति तत्रतृतीयदशमेचरणदृष्ट्यापश्यति नवमपंचमेद्विचरणदृष्ट्यापश्यति अष्टांबुनी अष्टमचतुर्थेचरणत्रयदृष्ट्यापश्यति स्मरगृहंसप्तमं चतुश्चरणदृष्ट्यापूर्णंपश्यतीत्यर्थः तृतीयदशमेशनिः नवमपंचमेगुरुः चतुर्थाष्टमेभौमः पूर्णदृष्ट्यापश्यतीति जातकांतरेसविशेषोज्ञेयः

इमेकुजादयोमेषतः मेषमारभ्यभवनपाः राशीशाः मेषस्यकुजः वृषस्यशुक्रः मिथुनस्यबुधः क
र्कस्यचंद्रः सिंहस्यरविरित्यादि ॥ ११ ॥ अध्यायंसमापयतिशालिन्याह हृद्येति श्रीगणेशेनवि
दुषाउक्त श्रीविषिष्टेन गणेशेनअलंकाराख्ये अलंकारनामके मंजुलेरुचिरेहृद्यैः पद्यैर्गुंफिते

हृद्यैःपद्यैर्गुंफितेसूरितोषेऽलंकाराख्येजातकेमंजुलेऽस्मिन् ॥ संज्ञाध्यायः
श्रीगणेशे नवर्यैर्वृत्तैर्दिग्भिःसंयुतोयंप्रणीतः ॥ १२ ॥ इतिजातकालं
कारेप्रथमोऽध्यायः ॥ १ ॥

मनोहरैः श्लोकैः रचितेऽस्मिनूग्रंथेवर्यैः श्रेष्टैः दिग्भिः दशभिः वृत्तैः श्लोकैः अयंआदिमःप्रथ
मः संज्ञाध्यायः प्रणीतः उक्तः रचितइत्यर्थः ॥ १२ ॥ इतिश्रीगणेशदैवज्ञरचितजातकालंकार
टीकायां हरभानु विरचित प्रथमोऽअध्यायः ॥ १ ॥

अथभावाध्यायोव्याख्ययातेकविः स्वविनयंविशदयन् भावफलंवक्तुंपृथिवीवृत्तेनप्रतिजनितेशु
केतिशुकाननसरोरुहाद्गलितं अहंतनुभावतःततःआरभ्यतत्फलंजातकफलंअधुनाब्रवीमि हेबु
धाःपंडिताः अत्रवचनेममयत्किमपि चापलंस्यात् तद्यूयंक्षमध्वंइतिप्रार्थना किंकृत्वा ब्रवी
मिअत्रभूमीतलेशुकाननसरोरुहात् शुकमुखारविंदाद्गलितंशिष्यप्रशिष्यद्वाराप्राप्तंपरमसुंदरं

शुकाननसरोरुहाद्गलितमत्रभूमीतलेफलंपरमसुंदरंसकलमाकलय्याधुना ॥ ब्रवी
मितनुभावतःप्रवरदैवविन्तोषदंयदत्रममचापलंकिमपितत्क्षमध्वंबुधाः ॥ १ ॥

सकलंफलंआकलय्यविचार्यकथंभूतंफलं प्रवरदैवविदांतोषदंउत्कृष्टज्योतिर्विदामानंददं अन्य
त्रोक्तमन्यतोग्राह्यमितिन्यायेनप्रथमंग्रहभावस्पष्टतातेषांबलंचज्ञातव्यंततो भावसामान्यफलां
तरशुभपापामित्रग्रहदृष्टियोगादिकंभावषड्वर्गाः भावेशस्योदयास्तादिकंज्ञातव्यम् तदुक्तंपृथु
यशसायोयोभावःस्वामिदृष्टोयुतोवासौम्यैर्वास्यात्तस्यतस्यास्तिवृद्धिःपापैरवंतस्यभावस्य हानि

निर्देष्टव्याप्रश्नतोजन्मतोवातत्रविशेषोगर्गजातके नीचस्थोरिपुगेहस्थोग्रहोभावविनाशकृत् ॥
उदासीनोग्रहोमध्येमित्रवर्गत्रिकोणगः ॥ स्वोच्चस्थश्चग्रहोप्येवंभाववृद्धिकरःस्मृतः ॥ व्ययाष्ट
मषष्ठभावेषु विपरीतफलमाह उशनाचार्यःसौम्याःपुष्टिंपापाविपर्ययसंश्रिताग्रहाःकुर्युः ॥ मूर्त्या
दिषुनिधनांत्यरिपुभावेऽप्युत्क्रमात्फलदाः॥ अन्यच्चसौम्यवर्गाश्रिताभावाःशुभतांप्राप्नुवंतिहि ॥
पापवर्गाधिकानेष्टास्तन्वाद्यानात्रसंशयः ॥ लग्नलग्नाधिपौस्यातांबलाधिकतरौयदि ॥ तत्फला
नांप्रवृद्धिःस्याद्धीनोहानिकरःस्मृतः ॥ एवंभावेषुसर्वेषुभावभावेशयोर्बलात् ॥ ततोजनुषिवक्त
व्याहानिर्वृद्धिश्चकोविदैरिति सर्वार्थचिंतामणौ लग्नादिभावाद्रिपुरंध्ररिःफेपापग्रहास्तद्भवना
दिनाशः । सौम्यास्तुतेपूक्तफलप्रदाः स्युस्तन्वादिकानांफलमेवमाहुः ॥ १ ॥ यद्भावनाथोरि
पुरंध्ररिःफेदुःस्थानपोयद्भवनस्थितोवा ॥ तद्भावनाशंकथयंतितज्ज्ञाःशुभेक्षितेतद्भवनस्यसौ
ख्यं ॥ २ ॥ तत्तद्भावेत्रिकोणेवसुखमदनभेचास्पदेसौम्ययुक्ते पापानांदृष्टिहीनेभवनपसहितेपा
पखेटैरयुक्ते ॥ भावानांपुष्टिमाहुस्त्वथचशुभकरीमन्यथात्वेप्रणाशंमिश्रंमिश्रैर्गृहेद्रैः सकलमपि

तथामूर्तिभावादिकानामिति ॥ १ ॥ अथत्रिभिः श्लोकैस्तनुभावविशेषमाह देहाधीशेति देहाधीशः लग्नस्वामी सपापःपापग्रहेणयुक्तः व्ययरिपुमृतिगः द्वादशषष्ठाष्टमान्यतमस्थानगतश्चेत्तदाजातस्यदेहसौख्यंनस्यात् अस्ययोगस्यधनादिभावेविचार्यत्वद्योतनायप्रथममुक्तिरितिगम्यते यद्भावनाथोरिपुरंध्ररिःफेतद्भावनाशंकथयंतितज्ज्ञाः ॥ इतिप्राक्लिखितत्वात् ॥ अन्यदाह

देहाधीशःसपापोव्ययरिपुमृतिगश्चेत्तदादेहसौख्यंनस्याज्जंतोर्निजर्क्षेव्ययरिपुमृतिपस्तत्फलस्यैवकर्ता ॥ मूर्तौचेत्क्रूरखेटस्तदनुतनुपतिस्वीयवीर्येणहीनंनानातंकाकुलःस्याद्व्रजतिहिमनुजोव्याधिमाधिप्रकोपं ॥ २ ॥

व्ययेशोव्यये षष्ठेशः षष्ठे अष्टमाधीशोष्टमेचतत्फलास्यैवकर्त्तादेहसौख्याभावकर्तास्यात् अयमर्थोयवनमते नविरुद्धोयथाबृहज्जातके रिपुभवनपेरिपुस्थेनीरुग्वैरीसुखीकृपणः ॥ निधनपतौनिधनस्थेव्यवसायीव्याधिवर्जितोप्युदितः ॥ विरोधशमनायअयमर्थोबोध्यः देहाधीशेव्यय

रिपुमृतिगेसातितद्भवनपेपितत्रस्थेशुभफलंस्यादितिनवाच्यंपूर्वोक्तयोगेसतिव्ययरिपुमृतिपः स्व
भवनगतश्चेत्तत्फलस्यैवकर्तेतिवाच्यं योगानामचिंत्यफलत्त्वादिति अथान्ययोगमाह मुर्ताविति
मूर्तौलग्नेतनुपतिः क्रूरग्रहः क्रूरखेटः लग्नेशः स्वीयवीर्येणहीनः स्वकीयबलहीनश्चेत्तदाजा
तोमनुजः नानातंकाकुलः अनेकरोगाकुलः व्याधिरोगंआधिप्रकोपंचिंताव्यासत्वंव्रजतिप्राप्नो

अंगाधीशःस्वगेहेबुधगुरुकविभिःसंयुतःकेंद्रगोवास्वीयेतुंगेस्वमित्रेयदिशुभभव
नेवीक्षितःसत्वरूपः ॥ स्यान्नूनंपुण्यशीलःसकलजनमतःसर्वसंपन्निधानम् ज्ञा
नीमंत्रीचभूपःसुरुचिरनयनोमानवोमानवानाम् ॥ ३ ॥

तिबलत्वंपरपुंग्रहंनीचास्तन्वादिभिर्ज्ञेयं तदुक्तंजातकामृते स्वोच्चंमूलत्रिकोणंस्वगृहमधिसहृद्गे
हकंमित्रकंस्यादौदासीन्यंसमर्क्षंरिपुभमधिरिपोर्भंचनीचाभिधानं। पूर्वेपूर्वेबलीयः परमपरमि
दंहनिसत्वंतदस्मादित्यादिवत्पद्धतिप्रकारमतेनउत्तमबलत्वंचज्ञेयं अल्पेबलेहीनबलइतिपद्ध

तिचवनात् ॥ २ ॥ अथशुभयोगानाह अंगाधीशः लग्नेचेदित्येकोयोगः बुधगुरुकविभिर्युक्तोल
ग्नेशः केंद्रगइतिद्वितीयःस्वीये तुंगेस्वोच्चेअजवृषभमृगांगनाकुलीराभ्रुषवाणिजौचदिवाकरादि
तुंगाइत्याद्युक्तेः स्वमित्रेस्वमित्रगृहे अथवाशुभभवनेशुभगृहे शुभगृहः वीक्षितः लग्नेशइति
तृतीयः एषामन्यतमयोगेजातोमानवः मानवानांमध्येभूपादिकः स्यात् भूपः भूपालः मंत्री

लग्नेक्रूरेथयातेखलखचरगृहेलग्ननाथेरवींदूक्रूरांतस्थानसंस्थावथदिनपनिशाना
थयोर्द्यूनयायी ॥ भूमीपुत्रस्तुपृष्ठादुदयमधिगतश्चंद्रजश्चेन्मनस्वीस्यादंधोदुष्ट
कर्मापरभवनरतःपूरुषःक्षीणकायः॥ ४ ॥

अमात्यः सर्वसंपन्निधानं सर्वसंपदामाश्रयः ज्ञानीभूपत्वाद्युपयुक्तज्ञानवान् सत्वरूपः सत्वगु
णानुरूपः अतश्चपुण्यशीलः सुकृतीसुरुचिरनयनः सुंदरनयनादिशरीरः सकलजनमतः सर्व
जनमान्यः पुण्यशीलशब्देनसत्यार्जवादिद्योत्यतेतदुक्तंजातकरहस्येयः सात्विकस्तस्यदया

स्थिरत्वंसत्यार्जवब्राह्मणदेवभक्ति रिति ॥ ३ ॥ अथानिष्टयोगत्रयंश्लोकेनाह क्रूरेलग्नेक्रूरग्रह राशौलग्नेशः स्थितः अयंएकोयोगः पुष्पवंतौरवींदूक्रूरयोर्ग्रहयोर्मध्यस्थौक्रूरमध्यस्थौ क्रूरमध्य स्थत्वंराश्यंशापेक्षयावाज्ञेयम्संकोचेप्रमाणाभावात् अयंद्वितीयोयोगः अथादिनपानिशानाथयोः सूर्याचंद्रमसोः द्यूनयायीसप्तमगः भौमः बुधः पृष्ठादुदयंअधिगतः पृष्ठोदयराशौस्थितइतितृ तीयोयोगः अत्रजातः पुरुषः मनस्वीप्रशस्तमनाइत्यर्थः अंधः दुष्टकर्मा परभवनरतः परगृह वासरतः परस्त्रीरतोवास्यात् क्षीणकायः क्षीणशरीरश्च मनस्वित्वंकालगतचंद्रस्यबलत्वेबोध्य म् एवंतनुभावस्यशुभाशुभयोगाउक्ताः ननुक्वचिच्छुभयोगेपिशुभफलंनोपलभ्यते तथाअशुभ योगेऽअशुभफलामिति तत्रकोविशेषइतिचेत्सत्यं क्रूरग्रहदृष्टयुतत्वादियोगेनअयंभावः शुभयो गकारकग्रहोपरिक्रूरदृष्टौसत्यांविनिश्चयप्राप्तंफलंनोपलभ्यते अशुभयोगकर्तरिग्रहोपरिशुभदृ ष्ट्या शुभंनोपलभ्यते ताजिककारैरित्थशालस्यदृष्टिप्रयुतमणऊंयोगेन भजंतंकृतमुक्तंबृहज्जा तककारेणनशुभाउदितायोगायथाभवंतिशुभेक्षिताइत्युक्तम्इतितनुभावः ।४। अथधनभावफलं

श्लोकद्वयेनब्रुवन् प्रथमधनयोगचतुष्टयमाह कोशाधीशोधनेशः गुरुयुतः स्वराशौस्वेभावेकेंद्रे वाचेत्तदाजातस्यसर्वसंपत्प्रदः स्यात् अथानंतरमन्ययोगउच्यते इत्यर्थः गुरुयुतोधनाधीशः त्रिकेषुषष्ठाष्टमद्वादशेषुअन्यतमेचेज्जातोमनुजः क्लेशभाक्द्रव्यहीनश्चस्यात् सगुरुः धनाधीशः षष्ठेचेदयंयोगः शिथिलोज्ञेयः तंप्रतिचाल्पधनयोगसद्भावात् धनाधीशस्यशुभत्वेमध्यधनयोग

कोशाधीशःस्वराशौसुरगुरुसहितःसर्वसंपत्प्रदःस्यात्केंद्रेवाथत्रिकेचेद्भवतिहिम नुजःक्लेशभाग्द्रव्यहीनः ॥स्वांत्याधीशौत्रिकस्थौकवितनुपयुतौस्यात्तदानेत्रही नश्चंद्रः पापेनयुक्तोधनभवनगतः शुक्रयुङ्नेत्रहीनः॥ ५ ॥ सद्भावात्

तदुक्तंबृहज्जातकेलग्नादतीववसुमान्वसुमान्शशांकात्सौम्यग्रहैरुपचयोपगतैः समेतैः॥ द्वाभ्यां समोल्पपशुमांश्चतदूनतायामन्येषुसत्स्वपिफलं त्विदमुत्कटेन ॥ अथान्ययोगः स्वांत्याधीशौ द्वितीयद्वादशाधीशौशुक्रलग्नेशयुक्तौचेत्तदाजातः नेत्रहीनः अंधः स्यात् अथान्योगः शुक्रप

पाभ्यांयुक्तश्चंद्रोधनस्थश्चेत्तदाजातोनेत्रहीनइति ॥ ५ ॥ अन्ययोगत्रयंतत्राद्वितीययोगस्यता तादिष्वतिदेशंचाह जनुषिजन्मसमयेसेंदुः सचंद्रः शुक्रस्त्रिकस्थः षष्टाष्टमद्वादशेषु अन्यतमेचे त्तदाजातोमनुजः निशिअंधकत्वंप्राप्नुयात् सार्कशुक्रः सूर्यशुक्रयुतः तनुभवनपतिः लग्नेशःत्रि कस्थइत्यनुषंगः तदानींजातोमनुजः जन्मांधः जन्मनैवाधः स्यादिति तातादीनांस्थाननाथा

शुक्रःसेंदुस्त्रिकस्थोजनुषिनिशिनरःप्राप्नुयादंधकत्वंजन्मांधःसार्कशुक्रस्तनुभवन पतिःस्यात्तदानींमनुष्यः ॥ एवंतातानुजांबासुतनिजगृहिणीस्थाननाथा स्थिता श्चेदादेश्यंतत्रतेषांप्रवरमतियुतैरंधकत्वंतदानीं ॥ ६ ॥

एवंपूर्वोक्तप्रकारेण सार्केंदुशुक्रास्त्रिकस्थाश्चेत्तदानीं तेषांतातादीनांअंधकत्वंप्रवरमतियुतैरादे श्यंवक्तव्यम् तत्रतातः पिता अनुजः कनिष्ठभ्राता अंबामाता निजगृहिणीभार्या प्रवरमति शब्देन तातादीनांजन्मन्यापि अंधयोगज्ञानत्वंसूच्यते इतिधनभावः ॥ ६ ॥

अथभ्रातृसंभवतत्सुखादियोगानाह भ्रातृस्थानेशभौमौ तृतीयाधिपतिभौमौ व्ययरिपुनिधन स्थानगौ १२। ६। ८ त्रिकस्थौयदितदाजातः बंधुहीनः सामान्यशब्दनिर्देशेनसहोदरबंधवोविव क्षितास्तैरहितइत्यर्थः सहजभवनपेसहजाधिपे स्वक्षेत्रेस्वगृहे सौम्यदृष्टेशुभग्रहदृष्टेसतिमानवः तद्वान्बंधुमान्स्यात् सहजाधिपेशुभग्रहयुतेकेंद्रस्थे अदभ्रंबहुबंधुसौख्यंस्यात् केंद्रस्थेसहजभव

भ्रातृस्थानेशभौमौव्ययरिपुनिधनस्थानगौबंधुहीनःस्वक्षेत्रेसौम्यदृष्टेसहजभव
नपेमानवःस्याच्चतद्वान् ॥ केंद्रस्थेबंधुसौख्यंशुभविहगयुतेस्याददभ्रंनराणांपा
पैश्चेदन्यथैतत्तदनुनिजधियाज्ञेयमित्थंसमस्तं ॥ ७ ॥

नपेपापग्रहैर्युतेचेदन्यथाबंधुसौख्यंनस्यात् युतेदृष्टेइत्युपलक्षणम् इत्थंअमुनाप्रकारेण बुद्धिम द्भिर्निजधियास्वबुध्यासमस्तं भावफलंतदनुयोगविचारानंतरंज्ञेयम् अयमर्थः योगेसत्यपि योगकर्तृषुभूयसीपापदृष्टिः पापयोगः योगकर्तॄणांनीचास्ततोयोगेप्रागुक्तंलक्षणंनस्यात् इति

तृतीयोभावः ॥ ७ ॥ अथचतुर्थभावफलंवदन्योगचतुष्टयमाहपाताले शश्चतुर्थेशः स्वराशौशुभ खचरयुतःशुभग्रहयुक्तःसन्भाग्यनाथेनभाग्यस्वामिनायुक्तश्चेज्जातःसामंतः स्यात् मांडलिकः स्यात् ततोयोगानंतरंलग्नस्थः वाहनेशोगुरुणापूर्णदृष्ट्यादृष्टश्चेत्तदाजातः राजपूज्यः राजकृ तसन्मानभाजनंस्यात् तदनुगुरुदृष्टः सुखेशः लाभगश्चेत् यद्वा गुरुदृष्टः सुखेशः यानंपश्य





पातालेशःस्वराशौशुभखचरयुतोभाग्यनाथेनयुक्तः सामंतः स्यात्ततश्चेत्सुरपति
गुरुणावाहनेशस्तनुस्थः ॥ संदृष्टोराजपूज्यस्तदनुचहिबुकाधीश्वरोलाभसंस्थो
यानंपश्यन्नराणांनिवहमभिमतंवाहनानांप्रदत्ते ॥ ८ ॥

न्भवतितदावाहनानांनिवहंसमूहंनराणाम्अभिमतंप्रदत्तेइदंयोगद्वयंवाशब्दप्रयोजकेपिज्ञेयम् अन्ययोगलाभाच्चतुर्थंदृष्टिविरहात् योगप्रभावप्रसङ्गात् ॥ ८ ॥ अथगृहप्राप्त्यादियोगानाह ल ग्नेशसहितश्चतुर्थभावनाथः स्वक्षेत्रेचतुर्थभवनेचेत्तदाजातस्यअकस्मादयत्नतोगृहाप्तिःगृहलाभः

नाशाः स्युः अथद्वादशाष्टमगताः क्रूराः यावन्तइत्यनुषङ्गश्चतुर्थंपश्यन्तिचेत्तदापण्डितैस्तद्व
देवदृष्टक्रूरगृहे संख्याप्रायेस्ववाहनानांविरामा स्युःरित्यर्थः तत्रवाहनानांशुभकरणंशान्तिकं

यावन्तोवाहनस्थाःशुभविगहदृशांगोचरानोभवेयुस्तावन्तोवा विरामाःपरमगुण
वतांवाहनानांनृणांस्युः॥क्रूराःपश्यंतियानंव्ययनिधनगताश्चेत्तदातद्वदेवप्राज्ञैरा
देश्यमेषांखलुशुभकरणंशान्तिकंवाहनानाम् ॥ १० ॥ विद्यास्थानाधिपोवागुरुबुध
सहितश्चेत्त्रिकेवर्तमानोविद्याहीनोनरःस्यादथनवमनिजक्षेत्रकेन्द्रेषुतद्वान् ॥ बाल
त्वंवृद्धतावायदिगगनसदांजन्मकालेतदास्यात्प्रज्ञामान्द्यंनराणामथयदिविहगः
स्वर्क्षगोदोषहृत्स्यात् ॥ ११ ॥

प्राज्ञैः आदेश्यंविधेयमितिशेषःइतिचतुर्थभावः ॥ १० ॥ अथपञ्चमभावफलं निरुपायेनविद्या
बुद्धियोगानाह विद्यास्थानाधिपःपञ्चमेशःकेवलोवाबुधगुरुसाहितोवात्रिकेवर्तमानश्चेत्तदाजा

स्यात्तथासुहृद्भिर्हितकारकैर्जनैः सौहार्दंप्रीतिः सुहृज्जनयुक्तंगृहादिस्यादित्यर्थः तनुपतियु
क्तः चतुर्थनाथः तदितरगृहगः चतुर्थभवनादन्यभवनस्थश्चेत्तदागृहालाभ्ययोगः गृहप्राप्त्य
भावः यावन्तः क्रूरग्रहाः द्विवितीयदशमचतुर्थद्वादशनाथैः सहिताः त्रिकस्थाः तावन्तोगृहाः जा
तस्यनुः नरस्यवह्निवशगतादग्धाः अतएवक्लेशदाः स्युः अत्रधनेशादीनांचतुर्णांसमुदितानमे

स्वक्षेत्रेतुर्यनाथस्तनुपतिसहितः स्यादकस्माद्गृहाप्तिः सौहार्दंवासुहृद्भिस्तदित
रगृहगश्चेद्गृहालभ्ययोगः॥यावन्तःपापखेटाधनदशमगृहप्रान्त्यपैश्चेत्रिकस्थायु
क्तास्तावत्प्रमाणाज्वलनवशगताः क्लेशदाः स्युर्गृहानुः ॥ ९ ॥

कयोगोनाविवक्षितः त्रिकभवनेयोवाप्रान्त्यसद्भावेसावकाशत्वात् ॥ ९ ॥ अथवाहनविराम
योगौतच्छान्तिकरणंचाह क्रूराइत्यनुषङ्गः यावन्तः वाहनस्थाः शुभाविहगदृशांगोचरानोभवे
युः शुभगृहदृष्टानस्युः तावन्तः नृणांपरमगुणवतांप्रकृष्टगुणयुक्तानांवाहनानांविरामाः वि

तोविद्याहीनः त्रिकस्तेपञ्चमेशे बुधगुरुयोगेविद्याद्यनुकूलोनास्तीतिवाशब्देनद्योतितम् अथपञ्च
मेशः पञ्चमनवमकेन्द्रेषुस्थितश्चेत्तदाजातः विद्यावान् बुधगुरुयोगेविद्यावत्त्वंकिमुतवक्तव्य
मिति गम्यतेअथजंमकालेप्रज्ञायोगकर्तॄणांगगनसदांग्रहाणांबालत्वंवृद्धतावायदितदाजातानां
प्रज्ञामान्द्यम्अल्पबुद्धिः स्यात्यदिबालोवृद्धोवाग्रहःस्वक्षेत्रगः तदादोषहृत् प्रज्ञामान्द्यत्वप्रयो

वाक्स्थानेशोगुरुर्वाव्ययारिपुविलयस्थानगोवाग्विहीनश्चैवंपित्रादिकानांपतयइ
ह्युतामूकतास्याच्चताभ्याम्॥वागीशात्पञ्चमेशास्त्रिकभवनगतःपुत्रधर्मांगनाथार
न्ध्रेद्वेष्यान्तिमस्थायदिजनुषिनृणामात्मजानामभावः ॥ १२ ॥

जकदोषंदूरीकुर्यादित्यर्थः ॥ ११ ॥ अथमूकत्वसंतानाभावयोगानाहवाक्स्थानेशः पञ्चमेशोगुरुर्वा
व्ययरिपुविलयस्थानगस्त्रिकस्थश्चेत्तदावाग्विहीनःमूकःस्यात् अथपित्रादिमूकतायोगमाहएवंप्र
कारेणपित्रादिभावानांदशमभावादिराशीनांपतयस्ताभ्यांपञ्चमेशगुरुयुताः त्रिकेतिष्टंतिचेत्तदा

जा०लं०

॥ १३ ॥

तातादीनांमूकत्वंस्यात् आदिशब्दात् अनुजादयोज्ञेयाः अथजन्मनिजीवात् जीवाधिष्ठितराशेः पञ्चमेशः त्रिकस्थःपुत्रधर्माङ्गनाथाः पञ्चमनवमलग्नेशाः जन्मलग्नात्त्रिकस्थाः यदितदापुत्राणामभावोवाच्यः ॥ १२ ॥ अथसंतानयोगमाह तेपुत्रधर्माङ्गनाथाः शुभखगसहिताश्चेत्तदासंतानोत्पत्तौकिंचित्कालंविलम्बःस्यात् शुभग्रहदशान्तर्दशाबलापेक्षयाविलम्बइतिभावः अथक

टी०

किंचित्कालंविलम्बःशुभखगसहितास्तेथकर्केसुतर्क्षेचन्द्रेकन्याप्रजावान्प्रमित
तनयवांश्चाथदेवेन्द्रपूज्यात् ॥ क्रूरश्चेत्पञ्चमस्थःसुतभवनगतःस्यात्तदापत्यहीन
श्छायापुत्रःस्वगेहाद्यदिभवतिसुतेसूनुरेकस्तदानीम् ॥ १३ ॥

र्कराशौपञ्चमभावेचन्द्रश्चेत्तदाकन्याप्रजावान् अथवाप्रमिततनयवान्स्वल्पापत्यःस्यात् अथदेवेन्द्रपूज्यात्जीवात्पञ्चमस्थःक्रूरश्चेत्जीवोपिलग्नात्पञ्चमगस्तदापत्यहीनः संतानरहितस्यात् ॥ १३ ॥
यदिस्वगेहात्स्वराशितःपञ्चमेछायापुत्रःशनिश्चेत्तदाएकपुत्रःस्यात् अत्रसंपूर्णदृष्ट्याशुभकृतस्य

शनेः स्वराशेः पुत्रभवनेदृष्ट्यानेकपुत्रयोगस्तदारविभौमयोः स्वगृहात्पञ्चमस्थयोरेकपुत्र
त्वांकिमुतवक्तव्यमितिगूढोभिप्रायः ॥ १३ ॥ अथअन्ययोगानाह नंदनेपंचमभावेकुंभे
छायासूनुरित्यनुषंगः यदितदापंचपुत्राः स्युः मकरेआत्मजाः तिस्रः मकरस्यस्त्रीराशि
त्वादितिभावः भौमेमकरेचेदित्यनुषंगः सुतानांत्रयस्यात् अथरौहिणेयः बुधः पंचमे

कुंभेचेत्पंचपुत्रास्तदनुचमकरेनंदनेप्यात्मजाःस्युस्तिस्त्रोभौमःसुतानांत्रितयम
थसुतादायकोरौहिणेयः॥ इत्थंकाव्यःशशीकोजनुषिचगुरुणाकेवलेनैवपुत्राःपंच
स्युःकेतुराव्होःक्रियवृषभवनेकर्कटेनोविलंबः॥ १४ ॥

सुतादायकः कन्याप्रदः इत्थंशुक्रश्चंद्रोपिपंचमेसुतादायकःएवंकेवलेनग्रहयोगरहितेनपंचमस्थे
नगुरुणापंचपुत्राःस्युःपंचमेमेषवृषेकर्केवाकेतुराव्होरेकतरेसाति नोविलंबः संतानोत्पत्तौप्रतिबंधो
नभवतीत्यर्थः नोविलंबइत्यनेनसूचितंमकरकुंभातिरिक्तराशौपंचमेशनौमकरमंतरेणतत्रस्थेभौ

मेक्रियादिराशीन्विहायपंचमेराहौवाकेतौसंततेर्विलंबएवोति ॥ १४ ॥ ननुकतिवर्षाणिविलंबइ
त्याह पापग्रहोजीवोवाचतुर्थस्थःपंचमेष्टमेवाचंद्रः भवतितर्हिखगुणमितसमातुल्यःत्रिंशद्वर्षमि

पापोवावासवेज्यः सुखभवनगतः पंचमेवाष्टमेवाशीतांशुः संततेःस्यात्खगुणमि
तसमातुल्यएवप्रबंधः॥यावंतःपापखेटास्तनयगृहगताःसौम्यदृष्ट्याविमुक्तास्ता
वद्वर्षप्रमाणोनियतमिहभवेत्संततेर्वाविलंबः॥१५॥तत्प्राप्तिर्धर्ममूलात्तदनुबुधक
वीशंकरस्याभिषेकाच्चंद्रश्चेत्तद्ददेवत्रिदिवपतिगुरुर्मंत्रयंत्रौषधीनां ॥ सिद्ध्यामंदा
रसूर्यायदिशिखितमसीतत्रवंशेशपूजाकार्याम्नायोक्तरीत्याबुधगुरुनवपाःक्षिप्रमे
वात्रसिद्धिः ॥ १६ ॥

तत्प्रबंधःसंततेरित्यनुषंगःप्रकृष्टो
बंधः शुभग्रहदृष्ट्याविमुक्ताः यावंतः पंचमस्थाः क्रूरग्रहाःस्युः बलाधीनफलाः खगाइत्युक्तप्र
कारैः स्थानदिगादिबलरूपकैः किंतादितिध्येयंतावद्वर्षप्रमाणः संततेर्निश्चयेनविलंबःस्यादित्य

र्थः ॥ १५ ॥ अथप्रतिबंधकभंजकसंतानोपायमाह तत्प्राप्तिः संततिप्राप्तिः धर्ममूलाश्रुतिस्मृति विधिगतोधर्मःमूलंहेतुर्यस्याः सा तथा आदित्यसप्तमीव्रतशंकराराधनसंतानगोपालमंत्रजप हरिवंशश्रवणादिविहितधर्ममूलेतिभावःअत्रविशेषः तदनुतत्पश्चाद्बुधकवीविलंबप्रयोजकौचे त् शंकरस्याभिषेकाद्रुद्राध्यायोक्तमंत्रकरणकाभिषेकात्तत्प्राप्तिरित्यनुषंगः चंद्रश्चेत्पूर्ववज्ज्ञेयम्

षष्ठेशेपापयुक्तेतनुनिधनगतेनुःशरीरेव्रणाःस्सुश्चादेश्यंतज्जनित्रीजनकसुतवधूबं
धुमित्रादिकानां ॥ इत्थंतत्स्थानगामीशिरसिदिनमणिश्चाननेशीतभानुःकंठेभू
मीतनूजोहृदिशशितनयोवाक्पतिर्नाभिमूले ॥ १७ ॥ गुरुश्चतथातदामंत्रयंत्रौषधी

नांसिद्ध्यासिद्धिशब्दोयंत्रादिभिःप्रत्येकंसंबध्यते यंत्रसिद्ध्याऔषधिसिद्ध्येतियंत्राचरणेनयं त्रग्रंथोक्तानिमंत्राणिसंतानगोपालमृत्युंजयादीनि औषध्यः लक्ष्मणाद्यास्तासांसिद्धिःविधिवद नुष्ठानसाध्यफलेत्यर्थःशनिभौमसूर्यराहूणांमध्येकस्यचित्प्रतिबंधकत्वेतत्रवंशेशपूजाकुल देवता

जा०लं०
॥ १५ ॥

पूजनम् आम्नायोक्तरीत्याकायाः आम्नायशब्दः वेदस्मृतिपुराणाद्युपलक्षणःतत्रापिविशेषः बुध गुरुनवमस्थानपाः प्रतिबंधकाश्चेदुमानुष्ठानात् शीघ्रमेवासिद्धिः स्यादिति इतिपंचमभावः ॥ १६ ॥ अथरिपुभावफलं वक्तुकामस्तावद्व्रणरोगानाहपापग्रहयुतेषष्ठेशेलग्नाष्टमगतेसतिनुः मनुजस्यशरीरेव्रणाः स्युः इत्थमुक्तप्रकारेणजनित्र्यादिभावानामीशेपापयुक्तेतनुनिधनगतेते

नेत्रेपृष्ठेचशुक्रोदिनकरतनयः स्यात्पदेचाधरेचेत्केतुर्वासैंहिकेयस्तदनुतनुपति भौमाबित्त्वेत्रसंस्थः ॥ आभामालोकितः सन्भवतिहिकतिचित्स्थानगोवातदा नींनेत्ररोगीनरः स्यात्प्रवरमातियुतैर्हौरिकैर्ज्ञेयमेवं ॥ १८ ॥

षांव्रणाः स्युःइत्यादेश्यंवक्तव्यम् अंगविशेषव्रणानाहतत्स्थानगामी तनुनिधनगतेःषष्ठेशादि नमणिः सूर्यश्चेत्‌शिरसिव्रणः चंद्रश्चेन्मुखे भोमश्चेत्कंठे बुधश्चेद्धृदये वाक्पतिश्चेन्नाभिमू ले व्रणाः स्युः ॥ १७ ॥ शुक्रश्चेन्नेत्रमूले पृष्ठेचशनिश्चेत्पदेचरणेराहुः केतुर्वाअधरेव्रणाः स्युः

टी०
॥ १५ ॥

इत्यग्रिमश्लोकेनान्वयः अथनेत्रव्याधियोगः तदनुभौमबुधराशिस्थोलग्नेशः भौमबुधदृष्टः क तिचित्स्थानगोपिवायत्रकुत्रवास्यात्तदानींजात नेत्ररोगीस्यात्ः प्रवरमतियुतैर्होरिकैरेवंज्ञेयम् ॥ १८ ॥ अथान्ययोगः षष्ठभावाधिपलग्नस्थेजातः शत्रुहंतास्यात् धनस्थेषष्ठेशे पुत्रात्तार्थः

षष्ठेशेलग्नयातेभवतिहिमनुजोवैरिहन्ताधनस्थेपुत्रात्तार्थोतिदुष्टःसहजभवनगे ग्रामदुःखा करःस्यात् ॥ नाभिस्थानेचरोगीतनुनिधनपतीशत्रुभावस्थितौनानेत्रे वामेतरेस्यादसुरकुलगुरुःसूर्यजस्त्वांघ्रिरोगी ॥ १९ ॥

पुत्रेणात्तः गृहीतः अर्थोधनं यस्यसपुत्रहृतधनइत्यर्थः अतिदुष्टश्चस्यात् सहजभवनगेग्रामस्य दुःखकरः नाभौरोगीचस्यात् लग्नाष्टमपतीषष्ठस्थेनापुरुषः नेत्ररोगीस्यात् अग्रेवामेतरशब्दोपादा नात् अत्रवामेइतिगम्यते शुक्रः षष्ठष्टमेइतरे दक्षिणनेत्रे रोगीशनिः पृष्ठेचरणेरोगीस्यात् ॥ १९

॥ १६ ॥

अथान्ययोगः राहुकेतूशत्रुभावेचेद्दंतेदंतछदेओष्ठेवारोगीस्यात् भौमबुधराशिस्थितोलग्नेशः स्वेनस्वशत्रुणापूर्णदृष्टः यत्राकुत्रापिस्यात्तदा आसनार्द्धेगुदसमीपेवारोगीस्यात् यदितौभूमि

दंतेदंतच्छदेवाकुमुदपतिरिपुःसंस्थितःषष्ठभावेकेतुर्वालग्ननाथःकुजबुधभवनेसं स्थितः क्वापिदृष्टः ॥ स्वेनप्रत्यर्थिनावाभवतिजनुषिचेदासनार्धेसरोगस्तोभूमी सूर्यपुत्रौयदिरिपुगृहगौतद्भवःसाद्गदोनुः ॥२०॥ प्रालेयांशौरिपुस्थेखलखगसहि तेमानवोरोगवान्स्यात्क्रूरैर्निष्पीडितश्चेत्तनुसदनगतः शीतरश्मिस्तदानीं ॥ क्रूरेकेंद्रालयस्थेयदिशुभविहगैर्नेक्षितेरोगवान्स्यात्तस्मिन्काव्यालयस्थेकुजगुरु कविभिर्नेक्षितेतद्वदेव ॥ २१ ॥ सूर्यपुत्रौरिपुगृहगौ

षष्ठभावसंस्थौचेत्तदातद्भवः नुः पुरुषस्यगदोरोगः स्यात् भूमिपुत्ररुधिररविकारःशनावितर विकारः स्यादित्यर्थः॥ २० ॥ तथाप्रालेयांशौचंद्रेखलखगसाहितेपापग्रहयुक्ते शत्रुभावस्थेसति

॥ १६ ॥

रोगवान्स्यात् क्रूरैर्निष्पीडितेशनिप्रभृतिभिः क्रूरग्रहैः योगेनदृष्ट्यावापीडिते तनुसदनगतेल
ग्नगेतस्मिन् शीतकरेचंद्रे तद्वान्रोगीस्यात् शुभगृहदृष्टिरहितःकेंद्रगःक्रूरश्चेद्रोगवान्स्यात्
तस्मिन्क्रूरेशुक्रराशिसंस्थेकुजशुक्रगुरुभिर्नदृष्टेतद्वदेवरोगवानेवस्यात् अत्रयद्यपिविशेषोनो
क्तस्तथापियोगकर्तृग्रहस्वामिकफवातापित्तादिकोपजन्योविशेषरोगोज्ञेयः ॥ २१ ॥ षष्ठेशेपुंराशि

पुंलग्नेस्वीयतुंगेरिपुभवनपतौवीक्षितेसन्नभोगैरंगेनूनंनराणामरिजनवशतः स्या
द्गदोगूढरूपः ॥ रिःफस्थानेस्थितेचेदरिसदनपतौसिंहिकापुत्रयुक्तेकिंवासप्ताश्वयु
क्तेपरगृहवसतिर्नीचवृत्तिर्नरः स्यात् ॥ २२ ॥

लग्नेस्वोच्चेवापापगृहैर्दृष्टेसतिनराणांजातानां अंगेशरीरेअरिजनवशतः शत्रुजनकारितः गूढरू
पः प्रच्छन्नः गदोरोगः स्यात् अत्रगृहतुंगराशीनांप्रायः स्त्रीराशित्वात् पुंलग्नेवाशब्दप्रयोगो
ज्ञायतेषष्ठेशोराहुयुक्तः यद्वासूर्ययुक्तः द्वादशेवास्थितः तदाजातः नरः परगृहवासीनीचवृत्ति

श्चस्यात् ॥ २२ ॥ अथसप्तमभावफलंनिरूपयिष्यन् विवाहयोगानाहयावंतोगृहाःसप्तमस्था सप्तमेशेनदृष्टाःतावंतोविवाहाःनुःपुरुषस्यज्ञेयाः सुमतिमताजन्मलग्नाभिज्ञेनदैवज्ञेनएवमुक्तप्र कारेणकुटुंबेजनकभ्रात्रादौज्ञेयं होरागमज्ञैर्जातकशास्त्रविद्भिरधिकबलवतांग्रहाणामेवयोगाद्वि

यावंतोवाविहंगामदनसदनगाश्चेन्निजाधीशदृष्टास्तावंतोनुर्विवाहास्त्वथसुम तिमताज्ञेयमित्थंकुटुंबे ॥ कार्योहोरागमज्ञैरधिकबलवतांखेचराणांहियोगादादे श्यंतत्रवीर्यंरविविधुकुभुवामंगदिक्शैलसंख्यं ॥ २३ ॥ केंद्रस्थावात्रिकोणेयदिखलु गृहिणीकारकाख्यानभोगाःकामार्थेशौनिजर्क्षेपरिणयनविधिःस्यात्तदानींनुरेकः ॥

चारः कार्यः तत्राधिकबलंरविविधुकुभुवांसूर्यचंद्रभौमानांअंगादिक्शैलसंख्यमादेश्यंसूर्यस्यषड् रूपाणि चंद्रस्यदशरूपाणि भौमस्यसप्तरुपाणि अन्येषांषड्रूपाण्येव अंगरूपाधिकोबलीति पद्धतिवचनात् ॥ २३ ॥ गृहिणीकारकाः सप्तमभावेशुभग्रहाः शुक्रेंदुजीवशशिजैःसकलैस्त्रि

भिर्वाद्वाभ्यांकलत्रभवनेचतथैकैकेन एषांगृहेपिचगणोपिविलोकितेवासंतितिस्त्रियोमदनभावपति
स्वभावाइतिकल्याणवर्मवचनात् एतेकेंद्रस्थाःवात्रिकोणेस्युःतथासप्तमाद्वितीयपतीस्वभवनेस्था
तांतदाजातस्यनुःपुरुषस्यपरिणयनविधिःविवाहएकःस्यात्सप्तमभावाधीशःद्वितीयाधिपोवाशु

जायाधीशःकुटुंबोधिपतिरपियुतश्चेत्रिकेगार्हितारव्यैर्यावद्भिःशुक्रयुक्तोनियतमिहभ
वेत्तावतीनांविरामः॥२४॥लग्नस्थेसप्तसप्तौदिनमणितनयेकामगेचार्कमंदौद्यूनेचं
द्रेनभःस्थेनचयदिगुरुणालोकितेनोप्रसूते॥ द्वेष्येशेमित्रमंदौद्विषिसितकिरणेऽ
स्तेबुधेनेक्षितेनोसूतेद्वेष्येजलर्क्षेयदिकुजरविजौगर्भिणीस्यान्ननारी ॥ २५ ॥

क्रयुक्तःयावद्भिः क्रूरग्रहैर्दृष्टःसहितःत्रिकेस्यात् तावतीनांस्त्रीणांविरामोनाशःस्यात् ॥ २४ ॥
अथगर्भाभावयोगानाह सप्तसप्तौसूर्येलग्नस्थेशनौसप्तमस्थेएकोयोगः अथसूर्यशनीसप्तमे गु
रुदृष्टिरहितश्चंद्रोदशमेइतिद्वितीयोयोगः अत्रनारीनोप्रसूतेद्वेष्येशः शत्रुभवनस्वामीतथामि

त्रमंदौरविशनिचाद्विषिष्ठेबुधेनदृष्टः सितकिरणश्चंद्रोस्तेसप्तमेअयंतृतीयोयोगः अत्रनारीनो
प्रसूतेकुजशनीषष्टेचतुर्थेयदितदाजातस्यनारीगर्भिणीनस्यादितिचतुर्थोयोगः इतिसप्तमभावः
॥ २५ ॥ अथअष्टमभावः कष्टकर्मकरादियोगमाह शुक्रगुरुबुधाः अष्टमस्थाः स्थिरराशिगताः

रंध्रस्थानास्थितावास्थिरभवनगताःशुक्रवागीशसौम्याः कृच्छ्राणांकर्मणांनाभव
तिहिनियतंकारकः स्तब्धभावः ॥ बाल्येदुःखीनरः स्यान्निधनगृहपतौलाभयाते
सुखीस्यात्पश्चात्पापेल्पमायुःशुभखगसहितेदीर्घमायुर्नराणां॥२६॥कुर्यादायुर्गृहे
शःखलखगयुगरिप्रांत्यसंस्थोल्पमायुश्चेल्लग्नाधीशयुक्तोनिधनभवनपःस्वल्पमायुः

वातदाजातः नापुरुषः नियतंनियमेनकष्टकर्मणांकर्तास्यात्स्तब्धभावः कठिनचित्तश्चस्यात्अ
ष्टमभावेशेलाभगेबाल्येबाल्यावस्थायांदुःखी पश्चात्सुखीस्यात् लाभगेष्टमेशेपापे अल्पायुः
स्यात् तस्मिन्नेवशुभग्रहयुक्तेजातानां दीर्घमायुः स्यात् ॥ २६ ॥ आयुर्गृहेशः अष्टमपति

क्रूरयुक्तःषष्ठद्वादशगतः तदाल्पमायुः कुर्यात् अष्टमपतिः लग्नेशयुक्तःअरिप्रांत्यसंस्थः इत्यनु
षंगः तदास्वल्पमायुःप्रदत्ते अष्टमेशःरंध्रस्थोवाचिरायुः प्रदत्तेअष्टमेशःतदनुरविभुवोवातत्रा
ष्टमेतद्वत्चिरायुः प्रदत्तेः लयेशः अष्टमेशः कोशस्थानस्थितः द्वितीयेस्थितश्चेत्तदातस्करो

प्रदत्ते ॥रंध्रस्थोवाचिरायुस्तदनुरविभवस्तत्रतद्वल्लयेशःक्लेशस्थानस्थितश्चेज्जनु
षिह्रिमनुजोवैरियुक्तस्करःस्यात्॥२७॥ आयुर्देहाधिनाथौनिधनरिपुगतौहीनवी
र्यौप्रसूतौसंग्रामेकीर्तिशेषंव्रजतिबलयुतौतौतदातज्ज्ञायाप्तिं ॥ शुक्रेणांदोलिका
यास्तनुपविधियुतोवाहनस्थाननाथोमूर्तौदंतावलेंद्रैरथगुरुसहितः स्याज्जयोवा
जिवाहैः ॥ २८ ॥ वैरियुक्तश्चस्यात् ॥२७ ॥

प्रसूतौजन्मसमयेआयुर्देहाधिनाथौ अष्टमलग्नपतीहीनवीर्यौ अष्टमषष्ठगतौतदासंग्रामेकीर्तिशे
षंप्राप्नोतिसंग्रामाभिमुखोयुद्धांविहायपंचत्वंप्राप्नोतीत्यर्थःतावेवायुर्देहाधिनाथौसबलौचोद्दिजयी

भवति चतुर्थेशः शुक्रेणयुतश्चेत् आंदोलिकायाः शिबिकायाः जयः शिबिकारूढोजयतीत्यर्थः टी०
लग्नेशेनचंद्रेणचयुतःमूर्तौलग्नेस्थितश्चेत्तदादंतावलेंद्रैः महागजैः जयःस्यात् अथचतुर्थेशोगुरु
युतः लग्नेचेत्तदावाजिवाहैः वाजिराजैः गजेंद्रैश्चसहजयःस्यात् इत्यष्टमभावः ॥ २८ ॥
अथनवमभावः शुभयोगमाह नवमभावेशोगुरुदृष्टः लग्नस्थश्चेत्तत्रजातोराजवंद्यः राजमान्यः

भाग्येशोमूर्तिवर्तीसुरपतिगुरुणालोकितोभूपवंद्यो लग्नस्थोवाहनेशोनवमपतिरु
भौपश्यतश्चेत्स्वगेहं ॥ सर्वासामास्पदंस्यान्मनुजइहतदासंपदांवाहनेंद्रोरंध्रस्था
नास्थितश्चेद्व्रजतिहिमनुजोभाग्यराहित्यमेवं ॥ २९ ॥

स्यात् भाग्येशः नवमाधिपः लग्नस्थः चतुर्थनवमपतीस्वभवनंचतुर्थपतिः चतुर्थनवमपतिर्न
वमंपूर्णदृष्टयापश्यतश्चेत्तदासर्वासांधनधान्यसुवर्णादिसंपदांआस्पदं आश्रयः मनुजः स्यात् ॥ १९ ॥
वाहनेशः अष्टमस्थस्तदामनुजः भाग्यराहित्यंव्रजतिहोराविद्भिरेवंप्रकारेणभाग्यराहित्यंनुःहीनः

नांशुभलक्षणांवयोबलादिरहितानां वाहनानांप्राप्तिस्तदनुचपलता स्थिरताचज्ञेयेत्यग्रिमेणसंबं
धः ॥२९॥ अथनवमेशेलाभगेराजमान्यः दीर्घायुर्धर्मशीलश्चस्यात् तदनुजनुषिधनवपुर्वाहनेशाः

हीनानांवाहनानांतदनुचपलताप्राप्तिरेवंनराणांज्ञेयाहोरागमज्ञैरथनवमपतौला
भगेराजवंद्यः ॥ दीर्घायुर्धर्मशीलस्तनुधनवपुर्वाहनेशःस्वगेहेधर्मेशोलग्नवर्ती
जनुषियदिग्गजस्वामिसिंहासनानाम् ॥ ३० ॥ योगानांस्यादमीषांप्रचुरबलयुतो
योधिपस्तद्दशायांलब्धिश्चांतर्दशायामथगुरुभृगुजौवाहनाधीशयुक्तौ॥ केंद्रेऽया
नेत्रिकोणेत्वथगुरुकवियुग्वाहनस्थानगोवाभाग्याधीशः स्वराशौभवतिनरपति
र्वाहनव्यूहनाथः ॥ ३१ ॥

द्वितीयलग्नचतुर्थपतयः स्वगेहेलग्नेशोलग्नेधनेशोधनेवाहनेशोवाहनभवनेइत्यर्थः धर्मेशोलग्नग
तोयादितदागजस्वामिसिंहासनानांप्राप्तिरित्यनुषंगः तत्रगजाः हस्तिनःस्वामिसिंहासनानांरा

जाधिष्टेयसिंहासनंराज्यकार्येषुभद्रासनंतेषांप्राप्तिःस्यात् ३० अमीषामुक्तवक्ष्यमाणानांयोगानां योधिपः योगकर्त्तायोग्रहः अधिकबलयुतस्तस्यदशायांअंतर्दशायांलब्धिःयोगफललाभःस्यात् अथगुरुशुक्रौवाहनेशयुतौसंतौकेंद्रे अयानेआगमेएकादशेइत्यर्थः त्रिकोणेस्यातामित्येकोयोगः अथगुरुशुक्रयुतोभाग्याधीशः भाग्यचतुर्थेवास्यात्तदाद्वितीयोयोगः अत्रयोगद्वयेजातः वाहनव्यू

कर्मस्थेक्षेत्रचिंतात्रिकभवनगतेसौख्यचिंतामहीजेवागीशेयानभूषावसनहयभ
वाचामरच्छत्रचिंता ॥ प्रालेयांशौसितेस्यादथमदनगतेवाक्पतौपुत्रचिंतासंता
नस्थानयातेहिमकरतनयेबुद्धिजाथात्रिकोणे ॥ ३२ ॥

हानांसमुदायानांनाथः ईशोनरपतिःस्यात् ॥ ३१ ॥ अथचिंतायोगः भौमेकर्मस्थेक्षेत्रचिंताक र्षणबीजवापक्षेत्रसंस्कारादिप्रकारकक्षेत्रचिंताइत्यर्थः त्रिकभवनगतेषष्ठाष्टमद्वादशेमहीजेसौ ख्यचिंतासकलविषयप्रयुक्तसौख्यचिंतास्यादित्यर्थः वागीशेत्रिकस्थेवाहनभूषणवस्त्राश्वभवा

चिंतास्यात् चंद्रेसितेवात्रिकस्थेचामरछत्रचिंतातत्प्राप्तौरक्षणेचचिंतास्यात् अथवाक्पतौ गुरौ
सप्तमस्थेपुत्रचिंतापुत्रविषयकगोरक्षणादिचिंतेत्यर्थः बुधेपंचमेबुद्धिजाचिंता सूर्येत्रिकोणस्थेपि
पितुर्बांधवस्यचचिंता शुक्रेसुतनवमसप्तमगेयात्राचिंता अथगुरौनवमपंचमपुत्रजापुत्रभवाचिं
तास्यात्चिंतानामयेषांजनानांक्षेत्रादिसंभवस्तेषां तद्विषयलाभालाभशुभानुकूल्यप्रातिकूल्या

मार्तंडेतातबंधोरथसुतनवमद्यूनगेदानवेज्येयात्राचिंतानराणामथनवमसुतेपुत्र
जावासवेज्ये ॥ कर्माधीशोविवीर्योयदिजनुषितदासर्वकर्मास्पदंनोगेहेस्वीयेय
दासौशुभविहगयुतोमानवोमानशीलः ॥ ३३ ॥ दिसंस्मृ

तिः इतिनवमभावः ॥ ३२ ॥ अथदशमफलमर्धेनाह जनुषिकर्मभावेशोविवीर्योनिर्बलश्चेत्तदा
जातः सर्वकर्मास्पदं सर्वकर्मणामास्पदंस्थानंनोसर्वकर्मसाधकोनस्यात् अर्थात्तुजनुषिकर्माधी
शोबलीचेत्सर्वाणिकर्माणिसाधयेज्जातइत्यर्थः यदाशुभग्रहयुतोदशमाधीशः स्वीयगेहेदशमेचेत्त

दाजातोमानवोमानशीलोमानीभवेत् ॥ ३३ ॥ अथदीर्घमध्यायुर्योगानाह यदानृणांजन्मसम
येलग्नाष्टमदशमेशाः लाभेकेंद्रेत्रिकोणेचास्थिताश्चेद्दीर्घायुःस्यात्पापग्रहाः पणफरचतुर्थतृतीय
स्थिताः मध्यमायुः स्यात् एतेंपूर्वोक्ताआपोक्लिमस्थाश्चेदल्पायुःस्यात् द्वात्रिंशद्वर्षादर्वाक्हीना
युः ततोमध्यायुः चतुःषष्ट्यनंतरंदीर्घायुर्ज्ञेयं लग्नेशदशमेशशनीनांअष्टमस्थानस्थितानांमध्येयो

लाभेकेंद्रेत्रिकोणेतनुनिधनभवस्थानगाःसंस्थिताश्चेद्दीर्घायुःपापखेटाःपणफर
हिबुकत्रिस्थितामध्यमायुः ॥ हीनायुःप्रोक्तमेतेयदिजनुषिनृणांस्युस्तदापोक्लि
मस्थारंध्रस्थानस्थितानांतनुपतिगगनस्वामिसूर्यात्मजानां। ३४।

हीनः हीनबलस्तस्यदशापर्यंतमायुः स्यादित्युत्तरेणसंबंधः॥३४॥ अथधर्मकर्मात्मजेशाःनवमद
शमपंचमेशाः स्वभवनेनवमादिकेस्युस्तदातेषांयोधिकबलस्तस्यदशायांजातस्यधर्मबुद्धिःस्या
त् अन्यथापरभवनेयदातेषांयोधिकबलस्तद्दशायां धर्महानिःस्यादित्यर्थः लग्नाष्टमपतीयदिश

निराहुकेतूनामन्यतमेनयुतौषष्ठस्थौतद्दशायांतनुनिधनपत्योराधिकबलस्यदशायांव्रणाःस्युः ३५
चतुर्थेशस्तत्रषष्ठभावेचेत्तदायानहेतुर्मृतिः स्यात्चोराच्छस्त्रेणचमृतिः तत्रेति अरिभावपरामर्शे
योहीनस्तद्दशायुस्त्वथनिजभवनेधर्मकर्मात्मजेशाश्चेत्स्युस्तेषांदशायांबहुलब
लवशाद्धर्मबुद्धिर्नराणां॥ हानिःस्यादन्यथारौतनुनिधनपतीभानुपुत्रेणयुक्तौस्या
तांस्वर्भानुनाचेत्तदनुचशिखिनातद्दशायांव्रणाःस्यु ॥३५ ॥
यानेशस्तत्रसंस्थोयदिभवतितदायानहेतुर्मृतिःस्याच्चोराच्छस्त्रेणाचतानवमभव
नतोभाग्यजाताविधेया ॥ व्योम्नोभूपालभूषावसनहयमहत्कर्मणांप्राप्तिंचता
लाभस्थानेखिलानांव्ययनिधनगृहात्कल्मषाणांबिधेया॥३६॥ नयानेशस्यशन्यादि
योगेवव्द्यते अयमर्थः शनियोगेयानहेतोर्मृतिः राहुयोगेचोरान्मृतिः केतुयोगेशस्त्रेणमृतिःअथ
संक्षेपादुक्तानां नवमादिभावानां सामान्यचिंतालंबनमुच्यते नवमभावतोभाग्यजाताचिंता

विधेया अयंभावः भाग्येयोग्रहः भाग्येशोयोग्रहः भाग्यभवनस्थोयोराशिः तद्द्वाराकेंद्रग्र
हात्भाग्यभवनेशुभाशुभवर्गविवेकःभाग्यभाग्येशबलाबलत्वमित्यादिविचार्यजातकशास्त्रवि
चारंपरिभूयबुद्ध्याफलंवक्तव्यंतथाभिहितंकल्याणवर्मणाभाग्यर्क्षमाश्रितोविहगः बलवान्मध्ये
बलोवाइत्यादितत्रान्यत्रभाग्येबलिष्ठेयदिमेषराशौचतुःपदोत्थंप्रकरोतिधर्मं वृषेबलिष्ठेबहुधेनुदा

लग्नस्थेरिः नफाथेभवातिसुवचनोमानवोरूपवान्वास्वर्क्षेकापण्यबुद्धिर्बहुतरपशु
मान्ग्रामयुक्तः सदास्यात् ॥ धर्मेतीर्थावलोकीबहुलवृषमतिःक्रूरयुक्तेचपापीमि
थ्याकोशांतकृत्स्यान्नियतमिदमितिज्ञेयमेवंसुधीभिः ॥ ३७ ॥

यीयुग्मेतथाब्राह्मणभोज्यदाता । स्यात्कर्कटेतीर्थपरश्चसिंहेजातोमनुष्यः परधर्मनिष्ठः यद्दृष्टि
धर्मोमनुजोयुवत्यांप्रसिद्धधर्मातुलजोमनुष्यः ॥ ३६ ॥ द्वादशभावाधिपेलग्नस्थेसातिमानवः
सुवचनः सुवाङ्माधुर्योरूपवान्भवति तथास्वर्क्षेस्वगृहेसातिकृपणबुद्धिः अनेकपशुयुक्तोग्राम

युक्तश्चग्रामाधिकारयुक्तश्चस्यात् तथाधर्मेनवमेसतितीर्थावलोकीतीर्थयात्रावान्बहुलवृषमतिः
अत्यंतधर्मबुद्धिश्चस्यात्तथापापग्रहयुक्तेसतिपापीमिथ्याकोशांतकृत् तथासंचितद्रव्यनाशक
श्चस्यात् अस्माद्योगान्नियतंफलंज्ञेयं ॥३७॥ प्रसिद्धधर्मेनिरतोष्टमेभवश्चापेतुशास्त्रेविहगः स्व
धर्मा मृगेविरज्येतसुधर्मतोनाकुंभेतुपापादिभवोहिधर्मः ॥ मीनेबलिष्ठेशुभभावजातोतडागवापी

हृद्यैःपद्यैर्गुंफितेसूरितोषेऽलंकाराख्येजातकेमंजुलेऽस्मिन् ॥ भावाध्यायः श्रीग
णेशेनवर्यैर्वृत्तैर्युक्तः शैलरामैःप्रणीतः। ३८। इतिश्रीजातकालं० भावफलाध्या
योद्वितीयः ॥ २ ॥

भवधर्मनिष्ठः १ भाग्येशेलग्नगेभूपकर्मकारीधनेधर्मं बंधुप्रियोभ्रातृभावेचतुर्थेपितृभक्तिमान् २
कृतीतुपंचमेषष्ठेजातोविकलकारकः सप्तमेसुभगस्त्रीमान्खंडः पापाष्टमेस्थितेः ३ स्वभेदातादे
वभक्तोदशमेनृपकार्यकृत् लाभेदीर्घायुरखिलोव्ययेदेशांतरस्थितिः ४ स्वस्वामिदृष्टियुक्तश्चे

त्स्वदेशफलदायकः ५ मुनिभिरुक्तं होरागमश्चबलवान्येषांतेश्रेष्ठमानवाः होरासारे भाग्येख
लाःस्वगृहगाः शुभदृष्टियुतायदि सौभाग्यसौख्ययुक्तस्यजन्मविद्याच्चभूपतेः १ क्रूरानीचारिभां
शस्थाभाग्येशेनचवीक्षिताः सर्वदाभाग्यहीनस्यजन्मविद्यान्नसंशयः २ लग्नगेभांतरेराशौमहा
भाग्योहिभाग्यतः एकेनमध्यभाग्यःस्यादभावेहीनभाग्यवान् ३ गर्गजातके हंतिपुण्यंचभाग्यं
चकर्मपुण्यगतोनृणां तुंगेस्वर्क्षेसहस्रांशुःपुष्कलंधर्ममादिशेत् ४ भाग्यभाग्यंभवेद्धन्यःपितृपक्ष
परायणः धर्मेपूर्णोमिशानाथः क्षीणःसर्वविनाशकृत् ५ कुजेरक्तपदानंदीभवेत्पशुपतिर्व्रती भा
ग्यहीनश्चसततंनरःपुण्यगृहंगते ६ मंदभाग्योबुधेपापेशुभेसौम्येतुधार्मिकःमहाभाग्यःशुभेजीवेत
थाशुक्रेबलीयसि ७ दंडप्रदोवक्रगतोनवमस्थेशनैश्चरे स्वर्क्षोच्चगेशनौभाग्येराजाभवतिधार्मि
कः ८ राहौधर्मगतेजातःसत्यशौचविवर्जितः ९ अन्यत्र भाग्याधिपश्चेद्यादिकेंद्रवर्तीआदौवय
स्येवसुखीमनुष्यः त्रिकोणगःस्वोच्चगतोथवास्यान्मध्येवयस्यल्पफलप्रदःस्यात् १ भाग्यस्यना
थेस्वगृहेथमित्रगृहेथवास्यात्स्वनवात्रिभागेभाग्योदयंतस्यवदंतितज्ज्ञाःशुभग्रहैर्द्रष्टयुतेक्षितेच

२ नीचस्थोवाशत्रुगेहस्थितोवाभाग्यस्वामीरिःफरंध्रारिगोवा पापैःखेटैःसंयुतोवाऽथदृष्टोभाग्यैर्हीनःस्याद्दरिद्रीसदैव ३ नवमभावपतीरिपुरंध्रगोनवमभोरिपुदृष्टयुतंतथा यदितदानचधर्मरतोनरःशुभखगैरथधर्मरतोनरः ४ अबलेपिशुभेखेटेभाग्यस्थेधार्मिकोनरःशुभवर्गयुतेभाग्येशुभकर्मायथान्यथा ५ इत्यादिचिंताविधेया तत्राहजातकसारावलीकारः होरेंद्वोर्बलयोगाद्योदशमस्तत्स्वभावजंकर्म तस्याधिपतेश्चतथावृद्धिर्ज्ञेयातथाहानिः १ दशमेनक्षत्रपतिर्लग्नात्पुरुषस्ययस्यसंभवति सर्वारंभोभवतिहिविनिर्दिशेत्तस्यजातस्य जातकसारे २ स्वस्थेखगेखलयुतेखलजेनवांशेस्वोच्चर्क्षगेस्वभवनेसुखवृत्तयःस्युः नीचारिभावगृहगेल्पसुखाल्पपुण्योदासोपचारभृतकानुचराश्चदासीः ३ धर्मभावेशुभक्षेत्रेशुभदृष्टेसुकर्मकृत्पापेक्षितेपापकर्मास्वामिदृष्टेतुमध्यमः ४ वैद्याःपुरोहिताःशास्त्रस्मृतिज्ञावंचकानराः जायंतेकर्मगैःपापैःसौम्यग्रहनिरीक्षितैः ५ वराहे अर्थाप्तिःपितृपत्नीशत्रुमित्रभ्रातृस्त्रीभृतकजनाद्दिवाकराद्यैःहोरेंद्वोर्दशमपतेर्विकल्पनीयाभेंद्वर्कास्पदगातिगोत्रनाशभृत्यां १ अर्कांशेतृणकणकर्णभेषजाद्यैश्चंद्रांशेकृषिजलजांगनाश्रयैश्च धात्वग्निप्रहर

णसाहसैः कुजांशे सौम्यांशे लिपिगणितादिकाव्यशीलैः २ जीवांशे द्विजविबुधदिवाकरादिधर्मैः का
व्यांशे मणिरजतादिगोमहिष्यैः सौरांशे श्रववधमारनीचशिल्पैः कर्मेशाध्वषितनवांशकर्मसिद्धिः
३ मित्रारिस्वगृहगतैस्ततस्ततोर्थात्तुंगस्थे बलिनि च भास्करे स्ववीर्यात्॥ राज्याधीशे केंद्रगे सौम्य
दृष्टे पापे केंद्रे सुप्रतापाभिधानः जातो नित्यं भूमिपैः सेवनीयो भाग्यैर्युक्तः सुप्रतापप्रसिद्ध इतिः।४। अ
थ लाभस्थाने अखिलानां वस्तूनां प्राप्तिचिंता विधेया तत्र होराप्रदीपे स्वस्वामिसद्ग्रहयुतेक्षित
आयवर्गैः सद्धर्मकृत भवति वस्तुविशेषलाभः क्रूरे च दृष्टिसहिते न च तत्र लाभस्तद्वर्गके प्यथ च मिश्र
फलं विधत्ते १ लाभे रवीक्षितयुते रविवर्गयुक्ते चोराच्चतुष्पदयुताच्च भवेत्प्रतापः तद्वद्विधौ युवतितोय
जनादिजातो भौमे सुवर्णमणिपावकशस्त्रजातः २ सौम्येक्षिते ज्ञगण आयगृहे धनं स्याच्छिल्पादि
काव्यलिपिभिस्तुरगैः सकांस्यैः जीवेक्षितायगुरुवर्गयुतायगेहे यज्ञादिहेमहयनागरथादिमुख्यैः ३
शुक्रेक्षितायशनिवर्गयुते महिष्यो लोहादि कृष्यवनकार्यभवाधिवृद्धिः । नीचारिभार्कगखगो
क्तफलं न दद्यान्नीतिग्रहोद्भवबले बलिनस्तु वाच्यम् ४ इति व्ययग्रहान्निधनगृहाच्च मलिनकर्मणां

चिन्ताविधेया गर्गजातके क्षीणेब्जेवारवौरिःफेधनंपुंसामथाहरेत् । बहुधार्थक्षयोभौमेज्ञदृष्टे न्येषुसिद्धयः १ नृपीडानचसंतप्तंपरिवादेनपीडितः । नृशंसंपुरुषंचान्द्रिः कुरुतेऽव्ययराशिगः २ उच्छिन्नूतव्ययकारीचव्ययगेदेवतागुरौ । श्रद्धाहीनोघृणाहीनोऽव्ययगेभार्गवेनरः ३ व्यायस्थान गतेमंदेक्रूरेषुकुरुतेरुचिं व्ययेराहौनीचकर्माकपटीकुलदूषकः ४ व्ययेभावेस्वामियुक्तेशुभदृष्टे

ग्रहाधीनायोगाःसदसदभिधानाजनिमतां ततोयोगाधीनंफलमितिपुराणैः समुदितम् ॥ अतोवक्ष्येयोगान्सकलगणकानंदजनकान् सुकास्यादुद्धृतंमतमहविलोक्येहरुचिरं ॥ १ ॥

चसत्यापि कीर्तिमान्जायतेमर्त्योविपरीतेविपर्ययः ॥ ३७ ॥ सुधीभिरिदंनियतंनियमेनज्ञेयस् अध्यायंसमापयति शालिनीवृत्तेनाह श्रीगणेशेनभावाध्यायःशैलरामैर्वृत्तैःसप्तत्रिंशद्भिःश्लोकै रुक्तः ॥ ३८ ॥ इतिश्रीजातकालंकारटीकायांभावफलाध्यायोद्वितीयः ॥ २ ॥

अथयोगाध्यायःतत्रतावत्शुभाशुभयोगान् व्ययस्ययोगांतरंवक्तुंप्रतिजानीते शिखरिणीवृत्तेन पुराणैर्वसिष्ठशुकपराशरप्रभृतिभिःप्रोक्तंफलंयोगाधीनं अतःसकलगणकानंदजनकान् अशेष ज्योतिर्विदांप्रीत्युत्पादकान्योगान्वक्ष्येकिंकृत्वाशुकास्यात् शुकमुनिमुखाद्भूतंरुचिरंशोभनंम तंविलोक्यआलोच्य ॥ १ ॥ अथानिष्टयोगानाह ऋक्षेशः जन्मराशिनाथः क्षीणबलःसन् ।

ऋक्षेशःक्षीणवीर्यःसुतनवमगतोमानवोमन्युमान्वैराशीशेसांगनाथेरिपुनिधनगृ
हेप्रांत्यगेदुर्बलःस्यात् ॥ धर्मद्वेष्याष्टनाथाःखलखचरयुताःस्थानकेक्वापिसंस्था
स्तैर्दृष्टाःस्यात्तदानींपरपुरुषरतासुंदरीतस्यपुंसः ॥ २ ॥

त्रिकोणगतश्चेन्मानवोजातःमन्युमान् क्रोधीस्यात्जन्मराशीशेसांगनाथे तनुपतिसहिते त्रिक स्थेदुर्बलः स्यात् यस्यनवमषष्ठाष्टमेशाः क्रूरग्रहदृष्टियुक्ताः यत्रकुत्रापिस्थिताः यदितदानींत स्यभार्या जारगामिनीस्यात् ॥ २ ॥ यस्यजन्मनिषष्ठाष्टमभवननाथौकुजाविधुयुतौचतुर्थस्थौ

स्यातांतदानींसनरः अन्यजातः जारजातः तथा नवमषष्ठाधिनाथौयत्रकुत्रापिस्थितौक्रूरग्रह युतौ अथवा केवलेनराहुणाशिखिनावायुतौस्यातांतदान्यजातः कलुषखगयुतावित्यनेनराहुः

मातृस्थानेस्थितौचेत्कुजविधुसहितौषष्ठरंध्राधिनाथौस्यातांयस्यप्रसूतौभवतिख लुनरस्त्वन्यजातस्तदानीं ॥ क्वापिस्थानेस्थितौस्तःकलुषखगयुतोभाग्यरंध्राधि नाथौचेदेवंराहुणावातदनुचशिखिनासंयुतावन्यजातः ॥ ३ ॥ युक्तौमंदेनशूद्रा दथभवतिविदावैश्यतोभास्करेणक्षत्राज्जातःसितेनत्रिदशपगुरुणाभूमिदेवात्प्रसू तः॥दैत्येशेज्यौसपापौमदनारिपुधनस्थानगौचेत्परस्त्रीगामीव्योमारिपौस्तोगग नभवनगौतत्पिताऽन्यारतःस्यात् ॥ ४ ॥

केतुरपिसर्वक्रूरयोगेविवक्षितःअग्रिमश्लोकेमंदादीनांपार्थक्येनयोगापदेशात् कलुषखगयुतावि त्यनेनैवसिद्धेराहुकेतुग्रहणंछंदोनुरोधात् ॥ ३ ॥ भाग्यषष्ठाधिनाथौमंदोनयुक्तौ शूद्राज्जातः उ

त्पन्नोभवति अथबुधयुक्तौवैश्याज्जातःभास्करेणयुतौचेत्क्षत्रियाज्जातःगुरुशुक्राभ्यांब्राह्मणाज्जा
तः बुधगुरुशुक्राणांकलुषखगयुतत्वेक्रूरैर्दृष्टत्वेतद्योगेननीचत्वेनास्तंगतत्वेनक्रूरवर्गस्थत्वेनवासु
धीभिर्बोध्य अथशुक्रबृहस्पतीसक्रूरौसप्तमषष्ठधनस्थानगतौचेत्तदापरस्त्रीगामीस्यात् दशमष
ष्ठाधिपौदशमस्थौतदातत्पिताजातस्यापिता अन्यारतः स्यात्परस्त्रीगामीस्यात् ॥ ४ ॥ क्रूरयुक्तो

मूर्तीशः पापयुक्तोधनसदनगतश्चेत्तदासज्जनस्त्रीसंयुक्तस्तत्पितास्याद्बलविहगयु
ताः कामशत्रुस्वनाथाः ॥ कोशस्थास्तद्वदेवंफलमितिविविधभ्रातृपत्न्योश्चपित्रोः
स्थानेशाः क्वापिभावेतनुपतिसहिताश्चेत्पुमानन्यजातः ॥ ५ ॥

लग्नेशः द्वितीयस्थश्चेत्पितासज्जनस्त्रीसंयुक्तः साधुजनस्त्रीगामीस्यात् सप्तमषष्ठद्वितीयभावेशाः
क्रुरयुताः द्वितीयस्थाश्चेत्तद्वदेवंफलंविविधमिति एवंप्रकारैः विविधफलमितिज्ञेयं सज्जनास्त्रि
यामासक्तिर्दुराचारत्वं अभक्ष्यभक्षकत्वमित्यादिज्ञेयमितिभावः तृतीयसप्तमचतुर्थमेशास्तनु

पतिसहितायत्रकुत्रापिस्थिताश्चेज्जातः पुमान्जारजातः ॥५॥ लग्नेशबुधौकुजचंद्रौवाराहुकेत्व
न्यतरयुतौतदाजातःश्वेतवर्णोपलक्षितकुष्ठरोगीभवति तदनुभौमशनियुतैः आदित्यश्चेद्रक्तव

लग्नाधीशेंदुपुत्रौक्षितितनयनिशानायकौक्कापिसंस्थौ युक्तौस्वर्भानुनावाभवति
हिमनुजः केतुनाश्वेतकुष्ठी॥ आदित्योभौमयुक्तस्तदनुशनियुतोरक्तकृष्णाख्यकु
ष्ठी सार्कोलग्नाधिनाथोव्ययरिपुनिधनस्थानगस्तापगंडः६ ज्ञेयश्चंद्रेणगंडोजल
जइहयुतोग्रंथिशस्त्रव्रणःस्याद्भूमीपुत्रेणपित्तंहिमकरतनयेनाथजीवेनरोगः॥ आ
मोद्भूतस्ततश्चेद्भृगुतनययुतोनुःक्षयाख्योगदःस्याच्चोरोद्भूतोंत्यजाद्वायमाशि
खितमसामेकयुक्तन्वधीशः ॥ ७ ॥

र्णःकृष्णवर्णनामककुष्ठवान्स्यात् सूर्ययुतोलग्नेशःत्रिकस्थश्चेत्तदाजातस्यतापगंडस्तापगंडान्वि
तोगंडोरोगविशेषः स्यात् ॥ ६ ॥

चंद्रेणयुतोलग्नेशः त्रिकस्थश्चेज्जलजोगंडस्यात्भौमयुतोलग्नेशः त्रिकस्थश्चेत्तदाग्रंथिशस्त्रव्रणः स्यात्ग्रंथ्युपलक्षितःशस्त्रजोव्रणःस्यादित्यर्थः बुधयुतोलग्नेशः त्रिकस्थःपित्तरोगःस्यात्जीवेनयुतोलग्नेशः त्रिकस्थश्चेत्तदाआमोद्भूतःआमकोपजोरोगःस्यात्शुक्रेणयुतस्तत्रस्थितोलग्नेशस्तदानुर्मनुष्यस्यक्षयाख्योरोगःयमाशिखितमसामेकयुक्शनिराहुकेतूनांमध्येएकेनयुक्तोलग्नेशःत्रि

चंद्रोमेषेवृषेवाकुजशनिसहितः श्वेतकुष्ठीसरोगोदैत्येज्यारेंदुमंदास्तिमिभवनगताःकर्कटालिस्थितावा ॥ अंगेसौख्येनहीनःपरमकलुषकृद्रक्तकुष्ठीनरःस्याद्रागीशोभार्गवोवायदिरिपुगृहपोमूर्तिगःक्रूरखेटैः ॥ ८ ॥

कस्थश्च त्तदाचोरजोऽन्त्यजादुत्पन्नोवारोगःस्यात्रजकचर्मकारादयोंत्यजाः।७।कुजशनियुतश्चंद्रोमेषेवृषेवायदितदानरःश्वेतकुष्ठीस्यात् शुक्रभौमेंदुशनयः मीनराशिस्थायद्वाकर्कटवृश्चिकस्थाःतदानरः शरीरसौख्यरहितःमहापातकीरक्तकुष्ठीस्यात् गुरुःशुक्रोवाषष्ठभावाधिपक्रूरैर्दृष्टोलग्नस्थ

श्चेचदावङ्कशोफीमुष्काधिकरणकश्वयथुरोगयुतःस्यादित्यग्रिमश्लोकेनसंबंधः ॥ ८ ॥ अथमी
नकर्कवृश्चिकराश्युपलक्षिताभावाःक्रूरसाहितायादितदानराणां एवंप्रकारेणाचिरंकुष्ठंस्यात् त
त्रप्रकारमाहयत्रलूताकारकःसविशेषःजंतुविशेषः उत्कृष्टगदाविशेषकरःलूताकारकृतकुष्ठःस्या

दृष्टश्चेद्वङ्कशोफीत्वथखलसहितामीनकर्कालिभावालूताकारश्चिरंस्यात्परमगद
करःकुष्ठएवंनराणाम्॥रिःफस्थानस्थितश्चेद्विबुधपतिगुरुर्गुह्यरोगीनितांतंभूमी
मार्तंडपुत्रौव्ययभवनगतौशत्रुगौवाव्रणीस्यात् ॥ ९ ॥

दित्यर्थः गुरुर्व्ययस्थश्चेन्नरः गुह्यरोगीस्यात् यद्वा वैद्याज्ञातरोगीस्यात् भौमशनीव्ययेषष्ठेवा
स्यातां तदाव्रणी व्रणयुतःस्यात् ॥ ९ ॥ क्रूरग्रहयुतौचंद्रशनीमेषमीनमकरवृश्चिकान्यतमराशि
गतौ नवमभवनगौचेन्मानवोजातः खंजः खंजाख्यपादरोगीस्यात् भूमिपुत्रः सप्तमदृष्ट्या
लग्नस्थंचंद्रशनिंचपश्यतिचेत्तदानरः बुद्ध्याहीनः स्यात् इनविधुाववरराविचंद्रयोर्मध्येभौमश्चे

त्तथैवबुद्धिहीनःस्यात् दिनशब्दोलक्षणयादिनकरपरोज्ञेयः ॥ १० ॥ चंद्रलग्नेसाधिकारेग्रहहो राद्रेष्काणादिवर्गाधिपत्यसहितशनौदशमस्थेबुधेनपूर्णदृष्टेस्मिन्मानवोजातः बुद्धिमान्स्यात्

मेषेमीनेकुलीरेतदनुचमकरेवृश्चिकेमंदचंद्रौस्यातांक्रूरान्वितौचेन्नवमभवनगौमा नवःस्याच्चखंजः ॥ लग्नस्थःपश्यतींदुंदिनमणितनयंभूमिजोद्यूनदृष्ट्या बुद्ध्याही नोनरःस्याद्दिनविधुविवरेभूमिजश्चेत्तथैव॥१०॥प्रालेयांशौतनुस्थेगगनसदनगे साधिकारेर्कसूनौदृष्टेस्मिन्कामदृष्ट्याहिमकिरणभुवाबुद्धियुङ्मानवःस्यात् ॥ पृ थ्वीसूनुंमृगांकंतनुनिलयगतंपूर्णदृष्ट्येंदुसूनुः पश्येच्चेद्बुद्धिहीनस्त्वथशशितनु पौभूभुवापीडितौवा ॥ ११ ॥

लग्नस्थभौमंचंद्रंचपूर्णदृष्ठ्याबुधः पश्यतिचेद्बुद्धिहीनःस्यात्‌ःयद्वा चंद्रालग्नेशौभौमेनपूर्ण दृष्ठ्यापीडितौबुद्धिहीनः स्यात् ॥ ११ ॥ लग्नस्थेबुधेतदनुक्रूरग्रहदृष्ठौशुभग्रहदृष्टिरहितौ

रविशनीएकराशौ अथवा एकभागेचक्रस्यपूर्वार्द्धेपरार्द्धेवाएकत्रगौषष्ठस्थौचेत्तदागतमतिर्निष्ट
मतिःस्यात् षष्ठभवननाथेसूर्येक्रूरग्रहयुतेतुर्यगेसतिहृद्रोगीस्यात् शनौगुरौवाषष्ठेशेक्रूरसहि

लग्नस्थेरौहिणेयेतदनुरविशनीक्रूरदृष्टौरिपुस्थावेकत्रैवैकभागेभवतिगतमतिर्दृ
ष्टिहीनौशुभानां ॥ तिग्मांशौवैरिनाथेखलविहगयुतेतुर्यगेसूर्यसूनौ हृद्रोगीवाकप
तौवाभवतिहृदिनरःकृष्णपित्तीसकंपः ॥ १२ ॥ दुष्टैर्वापीडितःसन्नथकुजरविजौ
वाक्पतिर्बंधुसंस्थाहृद्रोगःस्यान्नराणांव्रणइहनियतंक्लेशकारीशरीरे ॥ पाताल
स्थोमहीजस्तनयानिलयगाः सूर्यवित्सैंहिकेयारन्ध्रस्थोभानुपुत्रोयदिजनुषितदा
स्यान्नरोदुःखभागी ॥ १३ ॥

तेचतुर्थस्थेहृदिक्कृष्णपित्तरोगीस्यात् अथवा दुष्टैःपीडितोहृदिसकंपःस्यात् ॥ १२ ॥
अथकुजःसूर्यजोगुरुश्चतुर्थस्थोयदितदाइहयोगेहृद्रोगाढ्यौनराणांशरीरेक्लेशकारीव्रणःनियमेन

जा०लं०
॥ २९ ॥

टी०

स्यात् यदाजन्मसमयेभौमः चतुर्थस्थः सूर्यबुधराहवः पंचमस्थाःशनिःअष्टमस्थःतदाजातोनरः दुःखभागीभवति ॥ १३ ॥ स्वक्षेत्रस्थितोभौमोयदिलग्नंपश्येत्तदाजातः कातरः भीरुःस्यात् यदि शनिर्दशमस्थोरात्रौजन्मचेदत्रापितद्वाच्यंकातरःस्यादित्यर्थः लग्नगेभौमेस्वजनकलहकरः स्या त् स्वाधिकाराद्धीनेस्वगृहहोराद्रेष्काणादिराहितेसप्तमेभौमेवपुष्मान् दृढशरीरः अत्यंतयुद्धप्री

लग्नंपश्येन्निजर्क्षेयदिधरणिसुतःसंस्थितःकातरःस्याच्छायासूनुर्नभःस्थोयदि निशिजननंतद्वदत्रापिवाच्यं ॥ मूर्तौभूमीतनूजेस्वजनकलहकृत्द्यूनगेस्वाधिका राद्धीनेभौमेवपुष्मान्परमयुधिरतस्तीक्ष्णभावश्चनूनं ॥ १४ ॥ तिमान् ती

क्ष्णस्वभावश्चस्यात् नूनंनिश्चयेन ॥ १४ ॥ धरणिविधुसुतौभौमबुधौमिथःअन्योन्यंसप्तमदृ ष्ट्यापश्येतांतदानींजातःउच्चशरीरःस्यात्अथशनिरविभौमाश्चंद्रंपश्यंतिपूर्णंपश्यंतितदाजातः शीतलस्वभावःस्यात् शीतलत्वंजडत्वंमूर्खत्वमित्यर्थःक्षीणेचंद्रेभौमसहिते पापभूमापापकृत्ख ॥ ३० ॥

रस्तीक्ष्णभावःस्यात् मूर्तिस्थोबुधः सप्तमस्थंगुरुं पश्येत्तदाजातोहास्यासक्तइत्यग्रिमश्लोके नसंबंधः ॥ १५ ॥ अथभौमसहितेबुधेशभर्क्षेशुभग्रहराशौयद्वा कुजज्ञौसूर्यदृष्टौमंदराशिस्थौ त

पश्येतांकामदृष्ट्याधरणिविधुसुतौचेन्मिथःस्यात्तदानींमुच्चाकारोथचंद्रंशनिरवि महिजाश्चेत्प्रपश्यंतिशीतः॥क्षीणेप्रालेयनाभौधरणिजसहितेपापभूमीश्वरःस्या न्मूर्तिस्थोद्यूनदृष्ट्याहिमकरतनयोवासवेज्यंप्रपश्येत् ॥ १५ ॥ हास्यासक्तःसभौ मेहिमकरतनयेस्याच्छुभर्क्षेकुजज्ञौ मंदर्क्षेवार्कदृष्टौनरपातिविदुषांरंजनेकोविदः स्यात्॥पश्येत्काव्यंसितांशुर्व्ययविलयरिपुस्थानगोविस्मयालुःक्षिप्रंवाक्स्फूर्ति मान्स्यात्कुजबुधशशिनोर्वीर्यवत्खेटदृष्टाः ॥ १६ ॥दाराज्ञांविदुषांचरंजनेहर्षोसुखीक

रणेप्रवीणःस्यात् त्रिकस्थःचंद्रः शुक्रंपश्येत्तदाविस्मयालुः विस्मययुक्तः स्यात् कुजबुधेंदवः बलिष्ठग्रहदृष्टाश्चेच्छीघ्रंयथास्यात्तथावचनस्फूर्तियुक्तः स्यात् ॥ १६ ॥ शुक्रबुधौ सप्तमाष्टमदश

मगतौतदामानवः पुंश्चलःव्यभिचारीस्यात् शुक्रभौमौसप्तमदशमस्थौतद्वत्पुंश्चलःस्यात्शुक्र
भौमौचतुर्थदशमगौतद्वत्पुंश्चलः स्यात् चंद्राद्दशमेशुक्रेशनेश्चतुर्थेशुक्रः तदातद्वत्पुंश्चलः शुक्रे

शुक्रज्ञौद्यूनयातौगगनविलयगौमानवःपुंश्चलःस्यात् कामाज्ञामंदिरस्थौकविधर
णिसुतौतद्वदाज्ञांबुयातौ ॥ काव्यारौतद्वदिंदोर्नभसिरविसुतादास्फुजिन्नीरयायी
तद्वत्कामास्पदस्थाबुधसितशनयःस्वर्क्षगेभार्गवेहि । १७ । प्रालेयांशात्सिताद्वा
दिनमणितनयस्तत्पुरोभागवर्तीमूर्तौचेचंद्रशुक्रौयदितरणिसुतंपश्यतश्चायशाः
स्यात् । शेफश्छेदोनराणामथतपनसुतेभूमिकेंद्रेर्कयुक्तेदृष्टेकाव्योडुपाभ्यांयदिदि
वसपतेश्चोपरागोत्रतद्वत् । १८ ।

स्वराशिस्थेशुक्रबुधशनयः सप्तमदशमस्थाः तदातद्वदित्यनुषंगः ॥ १७ ॥ चंद्रात्शुक्रात्द्वादशः
शनिस्तत्पुरोभागवर्तीतदग्रिमभावेस्थितः चंद्रशुक्रौलग्नस्थौशनिंपश्यतश्चेत्तदाजातः अयशाश्च

पकीर्तिःस्यात्अथ सूर्ययुतेशनौभूमिकेंद्रेलग्नस्थेशुक्रेचंद्रदृष्टेसतिदिवसपतेः सूर्यस्योपरागः शेफ
श्च्छेदः लिंगच्छेदः तद्वदपकीर्तिःस्यात् ॥ १८ ॥ शुक्रेवक्रग्रहराशिगतेसतिमानवोजातः सी
मंतिन्याःरतेःसंभोगाद्धेतोस्तोषदायीसुखदायीसुखदः नस्यात् स्वीयालयस्थोलग्ननाथःसप्तम
गःभार्गवंयदिपश्येत्पूर्णदृष्ट्याइतिशेषः तदाजातः रहसिरतिस्थानेकामिनीतोषदातानस्यादि

यातेवक्रग्रहर्क्षेजनुषिभृगुसुतेमानवस्तोषदायीसीमंतिन्यारतः स्यान्नखलुमदन
गंभार्गवंलग्ननाथः । पश्येत्स्वीयालयस्थोयदिरहसितदाकामिनीतोषदाता न
स्यादेवंहिमांशुर्दिनकरसुतयुक्भौमतःखेसुखेवा ॥ १९ ॥ तिनद्वौनञौप्र

कृतमर्थंगमयतइतिन्यायात् चंद्रःशनियुतःभौमाच्चतुर्थेदशमेवास्यात्तदाएवमुक्तप्रकारेणकामी
नीतोषदातास्यादेव ॥ १९ ॥ प्रथमसुरगुरुःशुक्रः भौमयुक्तेज्यलग्नात् षष्ठपः षष्ठभावाधिपः त
दाजातनराणांकामाधिक्यंकामबलप्रचुरतांनियमेनजनयातिसशुक्रः पापदृष्टश्चेत्विशेषात्कामा

॥ ३१ ॥ धिक्यंजनयति तदनुशुक्रेस्वभवनस्थेमिथुनस्थेवामानवः कामवान्स्यात् सप्ताश्वपुत्रःशनिःध
नुषिवृषेवालग्नेचेत्तदामानवोल्पकामःस्यात् २० शनौमकरस्थेसति अल्पभाषीअप्रयोजनव

क्षोणीपुत्रेणयुक्तःप्रथमसुरगुरुर्लग्नतःषष्ठपोयंकामाधिक्यंनराणांजनयातिनियतं
पापदृष्टोविशेषात् ॥ काव्येस्वीयालयस्थेतदनुमिथुनगेकामवान्मानवःस्यान्मू
र्तौसप्ताश्वसूनौधनुषिचवृषभेचेत्पुमानल्पकामः ॥ २० ॥ मंदेनक्रेल्पभाषीत्वथ
रिपुगृहपेवासुधांशावदृश्येचदर्धेसंस्थितेंकोभवतिजनिमतांनेत्रयोःक्रूरयुक्ते ॥ प
श्येत्क्षीणेनचंद्रंयदिभृगुतनयःसूर्यजः पश्यतींदुंस्ववर्गेचंद्रेनभःस्थैर्यदिमदनगतै
र्वीक्ष्यतेपापखेटैः ॥ २१ ॥

ह्रुभाषीभवति तदनुषष्ठभवननाथेचंद्रेवाक्रूरयुते अदृश्यार्धेसंस्थितेसातिजनिमतोनेत्रयोरंकःचि
न्हविशेषोभवति सप्तमभावभोग्यांशानारभ्याष्टमादिक्रमेणलग्नभुक्तांशपर्यंतमदृश्यार्द्धंज्ञेयं

यदिद्क्षीणंचंद्रंशुक्रोनपश्येत् शनिरिंदुंपश्यातिकर्कस्थेचंद्रेदशमेसप्तमेवास्थितैः क्रूरग्रहैर्दृष्टेत
दानूनंनिश्चयेन स्वल्पनेत्रःस्यादित्यग्रिमपद्येनान्वयः ॥ २१ ॥ तदनुलग्नस्थंभौमंचंद्रंवावाच
स्पतिः शुक्रश्चपश्येत् चेत् मानवः काणनेत्रः स्यात् तिग्मभानोः सूर्यात्पुरोभागगे
अग्रगामिनि अस्ताभिलाषिभौमेनराणांदृक् विच्छायाकांतिरहितास्यात् सूर्यात्बुधपुरोभाग

स्यान्नूनंचाल्पनेत्रस्तदनुतनुगतंभूमिजंवाक्षयेशंपश्येद्वाचस्पतिश्चेदसुरकुलगु
रुःकाणदृङ्मानवःस्यात् ॥ विच्छायातिग्मभानोः क्षितिभुविचपरोभागगेदृङ्त
राणांसौम्येचिन्हेद्दशिस्यादथवपुषिलयेभार्गवेक्रूरदृष्टे ॥ २२ ॥

गेदृशिचिन्हंस्यात् अथभार्गवेशुक्रेलग्नस्थेष्टमेवाक्रूरदृष्टेसति अश्रुपाताद्धेतोर्नेत्रपीडास्यात् अ
ग्रिमश्लोकस्थेनसंबंधः ॥ २२ ॥ तदनुचंद्रभौमौएकभागेकनवांशस्थौतदानेत्रयोः किंचित्चिन्हं
स्यात् सुधीभिर्योगकर्तृग्रहबलवशात् एवमुक्तप्रकारेणादेश्यंवक्तव्यं तदनुक्रूरग्रहदृष्टेयुतेवासूर्ये

जा०लं०
॥ ३२ ॥

ऽव्ययगेनवमेपंचमेसातिजातःसुविकलनेत्रोऽप्रशस्तनयनःस्यात् सूर्यजेशनौक्रूरयुतेदृष्टेद्वादशगेन वमपंचमगेव्याधियुक्तोरोगीस्यात् ॥ २३ ॥ पृष्ठोदयराशिगंचंद्रंचतुर्थभावस्थःशनिःप्रपश्येत् ल

टी०

नेत्रेपीडाश्रुपातात्तदनुशशिकुजावेकभावेयदाद्दणोश्विन्हांकिंचितदानींग्रहबलव शतोदृश्यमेवसुधीभिः॥मार्तंडेरिःफयातेतदनुनवमगेपुत्रगेवाखलाढ्येदृष्टेवास्या न्मनस्वीसुविकलनयनःसूर्यगेव्याधियुक्तः ॥ २३ ॥ चंद्रंपृष्ठोदयस्थंहिबुकगृहग तःसुर्यसूनुःप्रपश्येदित्थंलग्नाधिनाथेक्रियभवनगतेमानवोवामनःस्यात् ॥ कोशे पीयूषभानुर्जलचरगृहगःसौरिणासंयुतोवामार्तंडेभूमिकेंद्रेयदिभवतितदादद्रुमा न्पूरुषःस्यात् ॥ २४ ॥

ग्नपेमेषराशिस्थितेजातोमानवः वामनःह्रस्वकायःस्यात्जलचरराशिस्थः चंद्रःद्वितीयेअथवाश निनायुक्ते अथवासूर्येलग्नगेयदिभवतितदादद्रुमान्कुष्ठयुक्तःपुरुषःस्यात् ॥ २४ ॥ षष्ठभावाधि ॥ ३२ ॥

पेचंद्रेसौम्यदृष्टिरहितेकेवलंक्रूरैर्दृष्टेप्लीहपीडितःस्यात् एवंकामाङ्गनाथेसप्तमनाथेलग्ननाथेवा चंद्रेकेवलंक्रूरदृष्टेप्लीहवान्स्यात् पापग्रहैर्दृष्टःशनिश्चतुर्थश्चेन्नष्टदृष्टिःअंधःस्यात् क्रूरग्रहैःनि

दृष्टेक्रूरैर्नसौम्यैर्यदिरिपुगृहपेचोडुपेप्लीहवान्स्यादेवंकामांगनाथेतदनुरविसुतस्तु र्यगोनष्टदृष्टिः ॥ प्लीहीस्याल्लग्ननाथेदिनकरतनयेक्रूरनिष्पीडितेचेत्सौख्यायुङ्मा नवःस्यात्तदनुसदनगेप्लीहवान्हर्षहीनः ॥ २५ ॥

क्रूराःकेंद्रालयस्थावपुषिचविकलाः केंद्रगौपुष्पवंतौकिंवालग्नेप्रपश्येत्काविमिनत नयःश्रोणिभागेंगहीनः ॥ काव्यःपातालयायीसुरपतिगुरुणाक्कापियुक्तोर्कसूनु र्भौमोवारौहिणेयोभवतिहिविकलःश्रोणिभागेभुजेंघ्रौ ॥२६॥

ष्पीडितेदृष्ट्यायोगेनवाविकलीकृतेयद्वावार्जितेलग्नेशेशनौसौख्यायुक्सौख्यरहितः स्यात्लग्नगते शनौप्लीहवान्आनंदरहितश्चस्यात् ॥ २५ ॥ यदाक्रूराः केंद्रगास्तदाजातःवपुषिशरीरेविकलः विक

लांगः स्यात् पुष्पवंतौसूर्यचंद्रौकेंद्रगौवातदाविकलांगः अत्रपुष्पवंतावित्युक्त्याचंद्रसूर्ययोरेकराशिस्थत्वंविवक्ष्यते चंद्रस्यक्षीणत्वाद्योगस्यविकलइतिभावः लग्नस्थंशुक्रंशनिः पश्येत्तदाश्रोणिभागेकटितटेअंगहीनः शुक्रश्चतुर्थगः गुरुसहितःशनिर्भौमोबुधोवायत्रकुत्रस्थितस्तदाकटितटेहस्तेचरणेवाविकलः स्यात् ॥ २६ ॥ निधननवमेशौक्रूराच्चतुर्थगौक्रूरयुतौजंघावैकल्यवान्

आयुःपुण्याधिनाथौयादिखलखचरात्तुर्यगौपापयुक्तौ जंघावैकल्यवान्स्यात्कुजशनिसहितेसैंहिकेयेचसूर्ये ॥ द्वेष्यस्थेतद्वदेवंशनिरिपुगृहपौरिःफयातौखलैश्चेद्दृष्टौतद्वत्तदानींरविविधुरविजावैरिरंध्रालयस्थाः ॥ २७ ॥

अनूरः स्यात् राहौभौमशनियुतेषष्टगेचकारात् भौमेशनियुतेसूर्येषष्ठगतेतद्वत्पंगुः स्यात् एवंशनिषष्ठभावेशौक्रूरदृष्टौव्ययस्थौतद्वत्पंगुःस्यात् सूर्यविधुशनयः षष्ठाष्टमभावस्थाः तदानींतस्यपंचशाखेहस्तेआर्तिः पीडास्यादित्यग्रिमश्लोकेनसंबंधः ॥ २७ ॥ तदनुशुक्रयुतेदशमस्थे

शनौक्लीबोनपुंसकः स्यात् शुक्राक्रांतराशेः व्ययषष्ठगेशनौक्लीबरूपः रूपेणक्लीबसदृशः नतुक्ली
बः सिंहराशिस्थश्चंद्रः सप्तमगंभौमंपश्येतदाकाणः स्यात् कर्कस्थः सूर्यः सप्तमगंभौमंपश्ये

स्यादार्त्तिःपंचशाखेतदनुदशमगेसूर्यसूनौसिताढ्येक्लीबःस्यात्सूर्यसूनौव्ययरिपु
गृहगेशुक्रतःक्लीबरूपः ॥ पश्येत्सूर्यालयस्थोमदनभवनगंभूमिसूनुंसुधांशुश्चा
र्कः काणश्चकर्केयदिशुभगृहपोमेषसिंहालिनक्रे ॥ २८ ॥

अन्योन्यंपश्यतश्चेत्तरणिहिमकरौतत्तनूजौमिथोवा भूसूनुःपश्यतीनंसमभवन
गतंत्वंगचंद्रौयदौजे ॥ ओजर्क्षेयुग्मराशौहिमकरशशिजौभूसुतेनेक्षितौचेत्पुंरा
शौलग्नशुक्रौतदनुहिमकरः क्लीबयोगाःषडेते ।२९।

त्तदाकाणःउभययोगेपिकाणःस्यात् यदिनवमपः मेषसिंहवृश्चिकमकरेस्यादितिसंबंधः॥२८॥
सूर्यचंद्रौओजर्क्षेयुग्मराशौइत्याकृष्यान्वयःअन्योन्यंपरस्परंपश्यतःओजराशिगःसूर्यःसमराशि

गंचंद्रंपश्यतितादृशश्चंद्रश्चसुर्यंपश्यति अयमेकोयोगः तत्तनुजौशनिबुधौओजराशिगौअन्यो न्यंपश्यतः द्वितीयोयोगः समराशिगंसूर्यंभौमः विषमराशिगइत्यर्थात्सिद्धंभौमंचसूर्यः अन्यो न्यंपश्यति इतितृतीयोयोगः लग्नचंद्रौविषमराशिगौभौमेन अर्थात्समराशिगेनदृष्टौ इतिचतु र्थोयोगः चंद्रबुधौक्रमेणविषमसमराशिगौभौमेनवीक्षितावितिपंचमोयोगः लग्नशुक्रौचंद्रश्चपु

आयुःस्थानोपयातेधरणिसुतयुतेभार्गवेवातकोपात्काव्येभौमेनयुक्तेकुजभवनग तेभूमिजामुष्कवृद्धिः॥ भौमर्क्षेकाव्यचंद्रौसुरपतिगुरुणासूर्यजेनाथदृष्टौनूनंस्या न्मानवानांजनुषिकललजामूष्कवृद्धिर्निंतांतं ॥ ३० ॥

राशौपुरुषग्रहराशिनवांशेस्थितावितिषष्ठोयोगः एतेषट्क्लीबयोगाज्ञेयाःतदुक्तंसारावल्याम् अ न्योन्यंरविचंद्रौविषमाविषमर्क्षगौनिरीक्षेते इंदुजरविपुत्रौवातथैवनपुंसकंकुरुते १ वक्रोविषम गतोर्कंसमगंचैवंपरस्परालोकात्विषमर्क्षेलग्नेंदूसमराशिगतःकुजोविलोकयति २ शशिशाशिजौ

समविषमेभौमेननिरीक्षितौभवतः ओजनवांशकसंस्थालग्नेंदुसिताप्तथौवोक्ताइति ।२९। भौम युतेशुक्रेष्टमस्थेवातकोपान्मुष्कवृद्धिः वृषणवृद्धिः स्यात् भौमराशिगतेभौमयुतेशुक्रेभूमिसंसर्गा त्वातकोपजावृषणवृद्धिः स्यात् येषांमानवानांजन्मसमयेभौमराशिस्थौशुक्रचंद्रौगुरुशनिदृष्टौ तेषांकललजाकललदोषजावृषणवृद्धिः अतिशयितास्यात् कललंशुक्रशोणितमिश्रीभावः । ३०।

क्रूरैर्दृष्टेविलग्नेसुविकृतरदनश्चापगोमेषसंज्ञेखल्वाटःपापलग्नेधनुषिगावितथालो कितेक्रूरखेटैः ॥ धर्मार्थात्यात्मजस्थायादिखलखचराबंधभाक्पूरुषः स्यादेवंलग्ने क्रियेवाधनुषिगावितथारश्मिजंबंधनंनुः ॥ ३१ ॥ धनुषिवृषेमेषेवाविलग्नेक्रूरैर्दृष्टेविकृतद शनः दंतरोगीस्यात् पापलग्नेपापैर्युक्तंलग्नंपापलग्नंतस्मिन्यथाप्रागुक्तयोगेनसांकर्यंस्यात् तस्मा त्क्रूरग्रहयुक्तेधनुषिवृषेवालग्नेक्रूरदृष्टेखल्वाटोखलतिरोगीस्यात् नवमद्वितीयद्वादशंपचमस्थाः क्रूराश्चेत्तदाबंधभाक्पुरुषः स्यात् एवंमेषेधनुषिवृषेवालग्नेक्रूराक्रांतेनुः पुरुषस्यरश्मिबंधनंस्या

त् ॥ ३१ ॥ शुक्रेशनिराशिस्थेजातोमानवोविग्रहेशरीरेदुर्गंधिः स्यात् षष्ठाधिपोमिथुनकन्यामक
रगेतद्वद्विग्रहेदुर्गंधिः अथकाव्येशुक्रेबुधर्क्षेतेनबुधनयुक्तेकेंद्रगेसतितद्वद्विगृहेदुर्गंधिः अथशुक्रश
नीस्वीयहद्दायुतौस्वत्रिंशांशगौचेत्तद्वद्विगृहेदुर्गंधिःअत्रछंदोनुरोधात्रिंशांशोहद्दाशब्देनोपलक्षि

दुर्गंधिर्दानवेज्येशनिभवनगतेमानवोविग्रहेस्याद्वेष्याधीशेबुधर्क्षेतदनुमकरगेतद्व
दत्राथकाव्ये ॥ केंद्रस्थेतेनयुक्तस्यादथकविरविजौस्वीयहद्दायुतौचेत्राद्वच्चंद्रेजया
तेतनुसदनगतेचानयेस्याद्विगंधः ॥ ३२ ॥ एवंग्रहणांसदसत्फलानांयोगाद्ग्रह
ज्ञैरनुयोजनीयं ॥ शुभाशुभंजन्मनिमानवानांफलंसुमत्याप्रविचार्यनूनं ॥ ३३॥

तःमेषस्थेचंद्रेलग्नगतेमुखेदुर्गंधिः स्यात् ॥ ३२ ॥ अथयोगाद्दशांसुविचार्यैवकर्तव्यंइत्युपजा
तिकयाह ग्रहज्ञैर्ग्रहाणांदीप्तदीनादिज्ञानवद्भिः मानवानांजन्मनिशुभाशुभफलंसुमत्यागृहलग्न
ज्ञानसंस्कृतयाबुद्ध्याविचार्यनिश्चयेनवक्तव्यं तथोक्तमृत्युलग्नेदशमेगृहगणितेजातकमवलो

क्यविशेषमपियः कथयतिशुभमशुभंवातस्यनमिथ्याभवेद्वाणी तथाचप्रदर्शितंनीलकंठदैवज्ञैः
स्वोच्चेदीप्तः समाख्यातोनीचेदीनः प्रकीर्तितः मुदितोमित्रगेहस्थः स्वस्थश्चस्वगृहेगृहः शत्रुगृहे
स्मृतः सुप्तोजितोन्यैश्चनिपीडितः नीचाभिमुखगोयस्तुगृहः खिन्नस्तुसस्मृतः सुवीर्यः कथितः

हृद्यैः पद्यैर्गुंफितेसूरितोषेलंकाराख्येजातकेमंजुलेस्मिन् ॥ योगाध्यायः श्रीगणे
शेनवर्यैर्वृत्तैर्युक्तोरामरामैः प्रणीतः ॥३४॥ इतिजात०योगाध्यायस्तृतीयः ॥३॥
भौजंगेकृत्तिकायांशतभिषजितथासूर्यमंदारवारे भद्रासंज्ञेतिथौयाकिलजननमि
यात्साकुमारीविषाख्या ॥ लग्नस्थौसौम्यखेटावशुभगगनगश्चैकआस्तेततोद्वौ
वैरिक्षेत्रानुयातौयदिजनुषितदासाकुमारीविषाख्या ॥ १ ॥

प्राज्ञैः स्वोच्चाभिमुखगोगृहः अधिवीर्योनिगदितः सुरश्मिः शुभवर्गगः ॥ ३३ ॥ अध्यायंस
मापयतिरामरामैर्वृत्तैरिन्द्रवज्राभिः ॥ ३४ ॥ इतिजातकालंकारटीकायांयोगाध्यायस्तृतीयः ॥ ३ ॥

अथविषकन्यायोगाः अथत्रिभिःपद्यैर्विशेषतोविषकन्यायोगानाह आश्लेषायांकृत्तिकायांतथा शततारकासुनक्षत्रेषुरविशनिभौमवारेषुभद्रासंज्ञकेतिथौद्वितीयासप्तमी द्वादशीसंज्ञोतिथौयाक न्याजननंइयात् जन्मप्राप्नुयात् साविषाख्याविषकन्याभवति अथनक्षत्रवारतिथीनांप्रत्येकंक्र मेणयोयोगःयथा आश्लेषारविद्वितीयाप्रथमोयोगः कृत्तिकाशनिसप्तमीद्वितीयोयोगः शतता

मंदाश्लेषाद्वितीयायादितदनुकुजेसप्तमीवारुणर्क्षेद्वादश्यांचाद्विदैवंदिनमणिदिव
सेयज्जनिःसाविषाख्या ॥ धर्मस्थोभूमिसूनुस्तनुसदनगतःसूर्यसूनुस्तदानींमार्तं
डःसूनुयातोयदिजनिसमयेसाकुमारीविषाख्या । २ ॥

रकाभौमद्वादशीतृतीयोयोगः एषुयोगेषुजातकन्याविषाख्येत्यर्थः द्वौशुभग्रहौलग्नगौएकःपापो दशमस्थः द्वौपापौशत्रुमास्थितौ यदितत्रकन्याजायतेतदासाविषकन्याभवति १ अथक्रमेण पिनक्षत्रातिथिवारयोगानाह अथशनिवारेआश्लेषाद्वितीया तदनुकुजवारेशततारकासप्तमी

दिनमणिदिवसेरविवारेविशाखाद्वादशी एषुयोगत्रयेषुयस्याः जन्मसाविषकन्याभवति यदि
जन्मसमयेभौमशनिसूर्याः क्रमेणनवमलग्नपंचमस्थास्तदाकुमारीसाविषकन्याभवति ॥ २ ॥
अथविषाख्यभंगमाहलग्नाच्चंद्राद्वामदनपातिःसप्तमपातिःशुभग्रहोवाद्यूनयार्यीसप्तमस्थः विषा

लग्नादिंदोःशुभोवायदिमदनपतिर्द्यूनयार्यीविषाख्यादोषंचैवानपत्यंतदनुचानि
यतंहंतिवैधव्यदोषं ॥ इत्थंज्ञेयंग्रहज्ञैःसुमतिभिरखिलंयोगजातंग्रहाणामार्यैरा
र्यानुमत्यामतमिहगदितंजातकेजातकानां ॥ ३ ॥ हृद्यैःपद्यैर्गुंफितेसूरितोषेलं
काराख्येर्जातकेमंजुलेस्मिन् ॥ कन्याध्यायःश्रीगणेशेनवर्यैर्वृत्तैर्युक्तोवन्हिसंख्यै
र्विषाख्यः ॥ ४ ॥ इतिश्रीजातकालंकारेविषकन्याध्यायश्चतुर्थः ॥ ४ ॥

ख्यदोषंतत्प्रयुक्तंअनपत्यंसंतानराहितत्वं वैधव्यदोषंचहंतिनाशयति एवमुक्तप्रकारेणइहास्मि
न्जातकेआर्यानुमत्यादैवज्ञसभ्यानुमतेनजातकानांगदितंअखिलंयोगजातंज्ञेयं ग्रहाणांस्वभाव

विशेषाभिज्ञैरेवेदंयोगजातंप्रवक्तुंत्तमामितिभावः ॥ ३ ॥ अध्यायंसमापयातिद्वयौरित्यादिना॥४

इतिश्रीजातकालंकारटीकायांविषकन्याध्यायश्चतुर्थः ॥ ४ ॥



आयुर्मूलंजन्मिनांजीवनंचह्याजीवानांनिर्जराणांसुधेव ॥ एवंप्राहुःपूर्वमाचार्यव
र्यास्तस्मादयुर्दायमेनंप्रवक्ष्ये ॥ १ ॥ लग्नाधीशोतिवीर्योयदिशुभविहगैरीक्षितः
केंद्रयातैर्दद्यादायुःसुदीर्घंगुरुगणसहितंश्रीयुतंमानवानाम् ॥ सौम्याःकेंद्रालय
स्थाजनुषिचरजनीनायकेस्वीयतुंगे वीर्याढ्येलग्ननाथेवपुषिचशरदांषष्टिरायुर्न
राणाम् ॥ २ ॥

अथायुर्दायाध्यायः ॥ १ ॥ लग्नाधीशोलग्नस्वामीकेंद्रयातैःलग्नचतुर्थसप्तमदशमस्थैःशुभग्रहै
र्दृष्टः अतिवीर्यः अधिकतरबलस्तदाजातानांमानवानांसौम्याः बुधगुरुशुक्राःस्वक्षेत्रस्थाः चंद्रे
स्वोच्चगेबलवातिलग्नेशेसतिजातानांनराणांषष्टिरायुःस्यात् ॥ २ ॥ लग्नाच्चंद्राद्वासौम्याः पूर्णचं

द्रबुधगुरुशुक्राः केंद्रस्थास्तत्रापिगुरौलग्नगेतत्रदशमस्थैः क्रूरैर्दृष्टंयुक्तंयदिनभवातितदावत्सराणां
सप्ततिरायुः स्यात्शुभग्रहाः मूलत्रिकोणस्थाः गुरौस्वोच्चगेलग्नेशेबहुबलेसतिनराणांगगनवसुसं

सौम्याः केंद्रालयस्थावपुषिसुरगुरौलग्नतोवासुधांशोरायुर्युक्तंनदृष्टंनचगगनगतैः
सप्ततिर्वत्सराणाम् ॥ यातामूलत्रिकोणेशुभगगनचराः स्वीयतुंगेसुरेज्येलग्नाधी
शेतिवीर्येगगनवसुसमातुल्यमायुर्नराणाम् ॥ ३ ॥
सौम्येकेंद्रेतिदीर्घेयदिनिधनपदंखेटहीनंसमाः स्युस्त्रिंशत्सौम्येक्षितंचेद्गगनहिमक
रैः संयुताथोस्वभेचेत् ॥ स्वत्र्यंशेचामरेज्येमुनिनयनमितंस्वर्क्षगोलग्नगोवाचंद्रे
द्यूनेशुभश्चेद्गगनरसमितंकोणगाः सौम्यखेटाः ॥ ४ ॥ स्व्यंअशी

तिवर्षोपलक्षितंआयुः स्यात् एतेषुयोगेषुगुरुगणयुक्तमिति अनूषंजनीयं ॥ ३ ॥ सौम्येबुधे
तिबलेकेंद्रस्थेसातिअष्टमपदंखेटहीनंयादितदावर्षाणांत्रिंशदायुः स्यात् निधनंसौम्येक्षितंचेत्गग

नाहिमकरैर्दशभिःसंयुतः त्रिंशद्वर्षाणांचत्वारिंशिदायुः स्यात् अथगुरौस्वराशौस्वद्रेष्काणेसातिमु
निनयनामितंसप्तविंशद्वर्षाणिआयुःस्यात् चंद्रः स्वर्क्षगोलग्नगोवासप्तमेशुभग्रहश्चेत्तदागगन
रसमितंषष्टिवर्षमितमायुः स्यात् शुभग्रहाः पंचमनवमस्थाःकर्कटेलग्नेसुरेज्योयदिभवतितदा
खाष्टतुल्यंअशीतिवर्षतुल्यमायुः स्यादित्यग्रिमश्लोकेनान्वयः ॥ ४ ॥ अष्टमेशोनवमेभावेल

कीटेलग्नेसुरेज्येयदिभवतितदाखाष्टतुल्यंलयेशोधर्मेगेचांगनाथेनिधनभवनगेक्रू
रदृष्टेब्धिहस्ताः ॥ लग्नाधीशाष्टनाथौलयभवनगतौसप्तविंशाद्विलग्नेक्रूरैर्ज्यौचद्रं
दृष्टौयदिनिधनगतः कश्चनास्तेद्विपक्षाः ॥ ५ ॥

ग्नेशेक्रूरदृष्टेअष्टमगतेअब्धिहस्ताश्चतुर्विंशतिरायुःस्यात् लग्नाष्टमेशौअष्टमस्थौयदितदासप्तविं
शतिवर्षाण्यायुः क्रूरसंयुतः गुरुः चंद्रदृष्टोलग्नेयदि अन्यः कश्चिद्ग्रहः अष्टमस्थः तदाद्विप
क्षाद्वाविंशतिरायुःस्यात् ॥ ५ ॥ लग्नचंद्रौक्रूरग्रहयोगराहितौलग्नेगुरौअष्टमंग्रहरहितंकेंद्रेशुभ

ग्रहेयादितदाखशैलाः सप्ततिः शुक्रबृहस्पतीकेंद्रगौचेत् शतंवर्षाणि गुरौकर्कलग्नेभृगुजेकेंद्रगे
चशतंवर्षाणि एतेविशिष्टयोगाइत्यर्थःयोस्यवैशिष्ट्यं यशः संपत्सूचकमितिभावः अथशनौ
लग्नेंदूक्रूरहीनौवपुषिसुरगुरौरंध्रभंखेटहीनंकेंद्रेसौम्येखशैलाःसितविबुधगुरू
स्याच्छतंकेंद्रगौचेत्। वागीशेकर्कलग्नेशतमिहभृगुजेकेंद्रगेथार्कसूनौधर्मांगस्थे
सुधांशौव्ययनवमगतेहायनानांशतंस्यात् ॥ ६ ॥ धीःकेंद्रायुर्नवस्थायदिखल
खचरानोगुरौभेविलग्नेकेंद्रेकाव्येगुरौवाशुभमपिनिधनंसौम्यदृष्टंशतंस्यात् ॥ ल
ग्नादिंदोर्नखेटायदिनिधनगतावीर्यभाजौसितेज्यौ पूर्णायुःस्वीयराशौशुभगगन
चराःषष्टिरंगोच्चगेब्जे ॥ ७ ॥ नवमगेलग्नस्थेवाचंद्रेव्ययनवमगतेवर्षाणांशत
मायुःस्यात् ॥ ६ ॥ क्रूरग्रहाःपंचमकेंद्राष्टमनवमस्थाः नोभवेयुः धनुर्मीनेलग्नेकेंद्रेशुक्रेगुरौवान
वमाष्टमंचशुक्रग्रहावलोकितंयदितदाशतंवर्षाण्यायुःस्यात् लग्नाच्चंद्राच्चगृहाः अष्टमस्थाः न

स्युः शुक्रगुरूबलवंतौतदापूर्णायुः व्योमार्कवर्षायुःस्यात् शुभग्रहाः स्वराशिस्थाः वृषेलग्नेवाचं द्रेसतिवर्षाणांषष्टिरायुःस्यात् ॥ ७ ॥ कोदंडांत्यस्यार्धलग्नेधनुर्लग्नद्वितीयहोरायांबुधेजिनांशैवृ

कोदंडांत्यार्धमंगंयदिसकलखगाःस्वोच्चगाज्ञोजिनांशेगौस्थेपूर्णंचकेंद्रेसुरपति भृगुजौलाभगेब्जेपरायुः ॥ शुक्रेमीनेतनुस्थेनिधनगृहगतेसौम्यदृष्टेसुधांशौजीवे केंद्रेशतंस्यादथतनुगृहपेछिद्रगेपुष्करेब्जे ॥ ८ ॥ वागीशेवीर्ययुक्तेनवमभवन गाःसर्वखेटाःशतायुःकर्कैगेजीवचंद्रौसहजरिपुभवेसत्कविज्ञौचकेंद्रे ॥ केंद्रेसूर्या रमंदागुरुनवलवगावाक्पतौलग्नयातेव्यष्टस्थानेषुशेषाःशरगजतुलितंस्यान्न राणांतदायुः ॥ ९ ॥

षस्थेअन्येसर्वेगृहाः स्वोच्चगाः तदापूर्णमायुःस्यात् गुरुशुक्रौकेंद्रेसतिलाभगेचंद्रेपरायुःपूर्णायुः शुक्रेमीनलग्नगेसौम्यग्रहदृष्टेचंद्रे अष्टमस्थेगुरौकेंद्रेसतिवर्षाणांशतमायुःस्यात् अथवा तनुगृह

पेइत्यग्रिमश्लोकेनान्वयः ॥ ८ ॥ लग्नपेऽष्टमस्थेचंद्रेदशमस्थेगुरौबलवाति अन्येग्रहाः नवमभवनगाःतदाशतायुः कर्केलग्नेचंद्रजीवौतृतीयषष्ठैकादशेशुभग्रहयुक्तौशुक्रबुधौचकेंद्रेयदितदापिशतायुः शतायुरितिदेहलीदीपकन्यायेनोभयत्रान्वेति रविभौमशनयः गुरुनवमांशस्थाःकेंद्रेस्युःलग्नस्थेगुरौशेषाः अष्टमराहितभावस्थाः तदानराणांशरगजतुलितंपंचाशीतिवर्षमितमायुः

क्रूराःसौम्यांशयाताउपचयगृहगाःकातराःकंटकस्थाःसौम्याव्योमार्कसंख्याय
दितनुपकुजौरंध्रगौनोपरायुः॥ केंद्रेलग्नेशजीवौनवसुतनिधनेकंटकेनोखलाख्यां
संपूर्णांपापखेटायदिगुरुजलगाजीवभावेचसौम्याः ॥ १० ॥

स्यात् ॥ ९ ॥ शुभग्रहनवांशस्थाःक्रूराः उपचयस्थाःत्रिषट्दशमस्थाःकातराःभीरवः युद्धपराजिताइतियावत् शुभग्रहाः कंटकस्थाःकेंद्रस्थाः तदाव्योमार्कसंख्यंविंशदधिकशतवर्षाणिआयुः परायुः स्यात् परायुर्योगेषुशनिकुजौअष्टमस्थौचेत्तदानोपरायुः परायुर्नभवतीत्यर्थः ल

जा॰लं॰ ॥ ४०॥ ग्नेशगुरू केंद्रस्थौक्रूरास्त्रिकोणाष्टमकेंद्रवर्जिताश्चेत्तदा पूर्णायुःस्यात् क्रूरग्रहाः गुरुजलगाःनव मचतुर्थगाः शुभाः जीवनवांशस्थाः यद्वा समराशिनवांशस्थाः संतः व्ययधनगृहगाःशुभाः पूर्णश्चंद्रःलग्नस्थः इहयोगेजातानांशतंवर्षाण्यायुः कथंभूतंइंदिरामंदिरंसंपदासहितमिति अ ग्रिमश्लोकपूर्वार्धेनसंबंधः ॥ १० ॥ शुभग्रहयुक्तेलग्नेशेलग्नेअन्यग्रहैर्नदृष्टेऽष्टमेशेऽष्टमगतेसतिव टी॰

युग्मत्त्रोर्शेगतावाव्ययधनगृहगाश्चेच्छुभाःभीतभानुःसंपूर्णोलग्नयायीशतामिह जनिनामिंदिरामंदिरंस्यात् ॥ लग्नेशेसौम्ययुक्तेवपुषिचलयपेरंध्रगेनान्यदृष्टेविं शत्केंद्रेलयेशेबालिवियुजितथालग्नपेत्रिंशदायुः ॥ ११ ॥

र्षाणांविंशातिरायुः स्यात् अष्टमेशलग्नेशेचकेंद्रस्थेबलरहितेचसतित्रिंशद्वर्षाण्यायुःस्यात्।११। चंद्रेआपोक्लिमस्थेतृतीयषष्ठनवमद्वादशगतेतत्पतौलग्नेशेआपोक्लिमस्थेउभयोनिर्बलेक्रूरदृष्टेचस तिदंतौस्तुल्यंद्वात्रिंशद्वर्षाण्यायुः स्यात् क्रूरग्रहयोरंतरेलग्नगोर्कश्चेत्तदाऽब्जात्रिसंख्यंएकात्रिंश ॥ ४० ॥

द्वर्षाण्यायुः गुरौद्वादशेकेंद्रेवासपापेलग्ननाथेनवमषष्ठतृतीयेसातिरामाब्दंत्रीणिवर्षाण्यायुः क
र्कलग्नेचंद्रभौमौकेंद्राणिअष्टमभवनंचग्रहरहितंयदितदारामाब्दंस्यादितिअग्रिमस्थेनान्वयः॥

इंदावापोक्लिमस्थेतदनुतनुपतौनिर्बलेपापदृष्टेदंतैस्तुल्यंततोर्कः खलखगविवरे
लग्नगोब्जत्रिसंख्यं । रिः फेकेंद्रेसुरेज्येगुरुरिपुसहजेस्यात्सपापेंगनाथेरामाब्दं
कर्कलग्नेकुजतुहिनकरौकेंद्ररंध्रंग्रहोनं ॥१२॥ रामाब्दंस्याल्लग्नयेशेवपुषिचनिधनं
सौम्यहीनंखवेदालग्नेशोरंध्रयातोवपुषिनिधनपः स्यान्नृणांबाणसंख्यं ॥ नक्रे
तिग्मांशुमंदौसहजरिपुगतौकंटकेरंध्रनाथेपारावाराब्धिसंख्यंतदनुशुभखगासल्ल
वर्त्तेत्रखाग्निः ॥ १३ ॥

१२ ॥ अष्टमेशेलग्नगतेअष्टमभवनंशुभग्रहरहितंखवेदाश्चत्वारिंशद्वर्षाण्यायुः स्यात् मकर
स्थौशनिरवीतृतीयषष्ठगौअष्टमेशेकेंद्रगेपारावाराब्धिसंख्यंचतुश्चत्वारिंशद्वर्षाण्यायुः स्यात् त

दनुशुभग्रहाः सद्भवर्ग्गेशुभग्रहनवांशेराशौवाऽत्रत्रिंशद्वर्षाण्यायुः स्यात् ॥ १३ ॥ लग्नेशेक्रूरदृ
ष्टेशुभग्रहाः बलिनःचंद्रेशुभवर्गगेकापिभावेस्थितेसतिगुणमुनितुलितंत्रिसप्ततिवर्षतुल्यमायुः
स्यात् चंद्रादष्टमगैःपापैःदिवाजन्मानिमध्यमायुः स्यात् अथशनौद्वंद्वंगेद्विस्वभावसंज्ञकेलग्ने
क्रूरैर्द्दष्टेंगनाथेयदिशुभविहगावीर्यवंतः सुधांशौसंस्थेसौम्येगणेचंद्रगुणमुनितुलि
तंरंध्रगैर्मध्यमायुः स्याच्चंद्रादन्हिपापैरथतपनसुतेद्व्यंगलग्नेहियातोरिःफेशेरंध्रना
थेयादिबलरहितेकंकपत्राग्निसंख्यं। १४। कर्केंगेसप्तसप्तौखलविहगयुतेपुष्कर
स्थेद्विजेशेकेंद्रयातेसुरेज्येशरविशिखामितंपुष्करेनारिगेवा।सौम्येपीयूषभानोव्य
यनिधनगतेदेहगेवाकवीज्यावेकर्केंव्योमबाणोर्व्ययरिपुनिधनेलग्ननाथाढ्यचंद्रे१५
स्थितेद्वादशभावनाथे अष्टमनाथेचबलहीनेसतिकंकपत्राग्निसंख्यंपंचविंशतिवर्षाण्यायुः स्या
त्। १४ ।सूर्येकर्कलग्नेक्रूरयुतेचंद्रेदशमगेगुरौकेंद्रस्थेशराविशिखमितंपंचपंचाशद्वर्षमितमायुः

स्यात्बुधेदशमेचतुर्थगेवाचंद्रेव्ययेऽष्टमेलग्नेवाशुक्रगुरूएकराशिगौक्कापिस्थितौचेत्तदाव्योमबा
णैः समंपंचाशद्वर्षमितमायुः स्यात्लग्नेशयुक्तेचंद्रेद्वादशषष्ठाष्टमेलग्नेशेशन्यंशेशनिनवांशगेभु
जगशरमितंअष्टपंचाशन्मितमायुःस्यादित्यग्रिमश्लोकेनान्वयः॥१५॥शुभग्रहाः अष्टमव्यतिरिक्त
भावस्थाःलग्नेशःपापयुक्तःत्रिकस्थस्तदाषष्टिवर्षाण्यायुःस्यात्सूर्यसहितश्चंद्रराशीशःलग्नेशश्च

शन्यंशेलग्ननाथेभुजगशरमितंस्यादथोसौम्यखेटारंध्रोनादेहनाथोव्ययरिपुनिध
नेपापयुक्षष्टिरायुः राशीशोलग्ननाथोदिनमणिसहितोमृत्युगोवाक्पतिश्चे
न्नोकेंद्रेषष्टिरायुर्वपुषिदिनपतिःशत्रुभौमान्वितश्चेत् ॥ १६ ॥ मृत्युगः गुरुकेंद्रगोन

चेत्षष्टिवर्षाण्यायुःस्यात् निजशत्रुभौमाभ्यांयुक्तःसूर्योलग्नेगुरौबलहीनेचंद्रेव्ययपंचमस्थेखशै
लाः सप्ततिवर्षाण्यायुःस्यादित्यग्रिमश्लोकेनान्वयः१६सर्वैःग्रहैःक्रूरराशिस्थैः शुभैःशुभगृहगतैः
लग्नपतौसबलेपरायुः स्यात् सुतभवनगतैःसर्वैर्ग्रहैःनराणांषष्टिवर्षाण्यायुःस्यात् ॥ १७ ॥ धनु

धरराश्यंत्यनवांशेलग्नगेशुभैः प्रथमनवांशस्थैःकेंद्रगैर्वर्षाणांशतमायुःस्यात् तृतीयचतुर्थाष्टम स्थैःसर्वैश्चिरायुः स्यात् लग्नाच्चंद्राच्चअष्टमेशेव्ययकेंद्रस्थेअष्टाविंशतिवर्षाण्यायुःस्यात् कें



वागीशेहीनवीर्येव्ययतनुजगतेयामिनीशेखशैलाधर्मेसर्वैःपरायुःखलखगलवगैः केंद्रयातैरशीतिः॥ क्रूरैःक्रूरर्क्षयातैः शुभभवनगतैःसौम्यखेटैःसवीर्यैर्लग्नेशेस्या त्परायुःसुतभवनगतैःषष्टिरायुर्नराणां॥ १७॥ सारंगस्यांत्यभागेयदिवपुषिग तेचाद्यभागेचकेंद्रे सौम्यैःखेटैःशतंस्याद्वसुसहजसुखेस्याच्चिरायुःसमस्तैः॥ ल ग्नात्प्रालेयभानोर्निधनमधनपेरिःफकेंद्रेष्टविंशत्केंद्रेसौम्यग्रहोनेयदिमृतिभवने कश्चिदास्तेखरामाः॥ १८॥

द्रेशुभगृहरहितेअष्टमस्थश्चेत्कश्चिद्गृहस्तदाखरामास्त्रिंशद्वर्षाण्यायुःस्यात्॥ १८॥

चंद्रे क्षीणे सति क्रूरग्रहोऽष्टमस्थः मृत्युभावेशः केंद्रस्थः लग्नेशो निर्बलस्तदा खाश्वितुल्यं विंशतिवर्षा
ण्यायुः स्यात् शुभग्रहैः आपोक्लिमगतैः शनिचंद्रौ षष्ठाष्टमस्थौ तदा कामांकुशैर्नखैस्तुल्यं विंशतिव

क्षीणे प्रालेयभानौ यदि खलचरो मृत्युगो मृत्युनाथः केंद्रस्थो लग्ननाथो निजबलर
हितः खाश्वितुल्यं तदायुः ॥ सौम्यैरापोक्लिमस्थैर्दिनमणिजविधूवैरिरंध्रालयस्थौ
तुल्यं कामांकुशैः स्यादथ धनमृतिगौ रिःफगौ पापखेटौ ॥ १९ ॥ हीनो स्वर्भानुना
वा यदि हिममहसा व्योमनेत्रप्रमाणं केन्द्रस्थौ सूर्यमन्दौ यदि वपुषि कुजः पुष्पबाणां
कुशं स्यात् ॥ शुक्रेज्यावंगयातौ तनयभवनगौ भौमपापावनायुर्जन्मेशः सार्कलग्ने
खलशुभसहितश्चेच्छितः स्यादनायुः ॥ २० ॥

र्षाण्यायुः स्यात् अथेत्यग्रिमश्लोकेनान्वयः ॥ १९ ॥ अथ राहुचंद्ररहितौ क्रूरग्रहौ द्वितीयाष्टद्वाद
शगौ तदा व्योमनेत्रप्रमाणं विंशतिसंख्यमायुः सूर्यशनी केंद्रगौ कुजो लग्नगस्तदा पुष्पबाणांकुशं विं

शद्वर्षाण्यायुःस्यात् शुक्रगुरूलग्नस्थौभौमपापौपंचमस्थौतदाऽनायुः अल्पायुःस्यात् कर्कयुक्तो लग्नेशः जन्मराशिसंस्थितःअन्यैर्युतःदृष्टश्चेत्तदाऽनायुःअल्पायुःस्यात् ॥ २० ॥ जातकशास्त्रस मुद्रोत्तीर्णैः समस्तजातकशास्त्रज्ञादिभिरित्यर्थः पूर्वंयद्योगजमायुः प्रोक्तंप्रणीतंतस्मात्पूर्वोक्तात्

यत्संप्रोक्तंयोगजंपूर्वमायुर्होरापारावारपारंगमज्ञैः ॥ तस्मादायुःसारभूतंयदेत त्पुण्याचारश्लोकभाजांनराणां ॥ २१ ॥ बलाबलविवेकेनपुष्करालयशालिनां ॥ सुमनोभिरिदंदेश्यमायुर्धर्मादिशालिनां ॥ २२ ॥

सारभूतंदृढांशभूतं आयुर्यदेतदुक्तंतत्पुण्याचारश्लोकभाजांसदाचारोपलब्धितधर्मयशोयुक्तानां नराणांघटतइत्यध्याहारः ॥ २१ ॥ अथादेशविधिमनुष्टुब्वृत्तेनाह बलाबलविवेकेनेति पुष्करा लयशालिनांसूर्यादिग्रहाणांबलाबलबिचारेणसुमनोभिरिदमायुःकथनीयं धर्मादिशालिनांभव

ति पापकर्मिणांनभवतीति अर्थात्सिद्धं ॥ २२ ॥ अध्यायंसमापयतिहृद्यैःरिति ॥ २३ ॥
इतिश्रीजातकालंकार टीकायांपंचमोऽध्यायः ॥ ५ ॥

हृद्यैःपद्यैर्गुंफितेसूरितोषेलंकाराख्येजातकेमंजुलेस्मिन् ॥ आयुर्दायःश्रीगणेशे
नवर्यैर्वृत्तैर्युक्तोबाहुपद्यैःप्रणीतः ॥३३॥ इतिजातकालकारेपंचमोध्यायः ॥ ५ ॥
लग्नाधीशेर्थगेचेद्धनभवनपतौलग्नयातेर्थवान्स्याद्बुध्याचारप्रवीणःपरमसुकृतकृ
त्सारभृद्भोगशीलः ॥ भ्रातृस्थानेंगनाथेसहजभवनपेलग्नयातेल्पशक्तिः सद्बंधू
राजपूज्यःकुलजनसुखदोमातृपक्षेणयुक्तः ॥ १ ॥

अथलग्नेशधनेशादीनांव्यत्ययात्फलान्याह लग्नेशेधनगेधनेशेलग्नगेसतिजातोधनवान्बुद्ध्याचा
रप्रवीणःबुद्ध्याचारेणचनिपुणः उत्कृष्टपुण्यकृत्बलवान्भोगैकशीलश्चस्यात्लग्नेशेसहजेसहजे
शेलग्नस्थे अल्पवीर्यः प्रशस्तबंधुयुक्तःकुलजातानांसुखदः मातृपक्षेणसाहितश्चस्यात् ॥ १ ॥

चतुर्थेलग्नेशेलग्नगेचतुर्थेशेजातः क्षमायुक्तः ताताज्ञाराजकार्यप्रगुणमतियुक्तः पितुराज्ञायांराजकार्येचऋजुमतिःसन्प्रशस्तोगुरुर्यस्ययद्वासतोगुरुः स्वकीयपक्षेचस्थितःस्यात् पंचमेशेलग्ने

तुर्येशेलग्नयातेतदनुतनुपतौतुर्यगेस्यात्क्षमावान्ताताज्ञाराजकार्यप्रगुणमतियुतः सद्गुरुः स्वीयपक्षः ॥ लग्नस्थेसूनुनाथेतनुजपदगतेलग्ननाथेमनस्वीविद्यालंकारयुक्तोनिजकुलविदितोज्ञानवान्मानसक्तः ॥ २ ॥ षष्ठेशेलग्नयातेतदनुतनुपतौषष्ठगेव्याधिहीनोनित्यंद्रोहादिसक्तोवपुषिसबलवान्द्रव्यवान्संग्रहीस्यात् । मूर्तीशेकामयातेमदनसदनपेमूर्तिगेतातसेवीलोलस्वांतोंगनायांभवतिहिमनुजः सेवकःशालकस्य ॥ ३ ॥

लग्नेशेपंचमस्थेसतिनरः प्रशस्तमनाः विद्ययाभूषितः स्वकुलेविख्यातोज्ञानवान्सदसद्वस्तुज्ञः मानेअभिमानेसक्तः ॥ २ ॥ षष्ठेशेलग्नगेतदनुलग्नेशेषष्ठगेसतिनित्यंरोगरहितः अतएवशरीरे

बलवान्द्रोहादौसक्तः आदिशब्देनपरानिष्टकरणादिज्ञेयं संग्रहपरः अतोद्रव्यवान्स्यात् लग्नेशे
सप्तमस्थेसप्तमेशेलग्नस्थेसातितदामनुजः पितृभक्तः स्त्रीविषयेचंचलमनाः शालकस्यभार्याभ्रा
तुः कार्यकरः स्यात् ॥ ३ ॥ लग्नेशेऽष्टमगेऽष्टमेशेलग्नगेद्यूतव्यवहारेनिपुणः विक्रमवान्चौर्या

अंगेशेरंध्रयातेनिधनगृहपतावंगगेद्यूतबुद्धिः शूरश्चौर्यादिसक्तोनिधनपदमिया
द्भूपतेर्लोकतोवा । देहाधीशेशुभस्थेशुभभवनपतौदेहसंस्थेविदेशीधर्मासक्तोनि
तांतंसुरगुरुभजनेतत्परोराजमान्यः ॥ ४ ॥ कर्मस्थेलग्ननाथेगगनभवनपेलग्न
गेभूपतिःस्यात्ख्यातोलाभेचरूपेगुरुभजनरतोलोलुपोद्रव्यनाथः ।

दिसहितः आदिशब्देनवंचनासुनिपुणः राजतोलोकतोवानिधनपदंमरणमाप्नुयात् लग्नेशेन
वमस्थेनवमेशेलग्नस्थेसातिविदेशवासीनितांतंधर्मेरतः देवाराधनेगुरुसेवायांचतत्परः राजसत्का
रभाजनंस्यात् ॥ ४ ॥ लग्नेशेकर्मस्थेकर्मनाथेलग्नगेभूपालः लाभेनतद्वत्सुरूपेणचाविख्यातः

गुरुसेवायांप्रीतिमान् लोलुपः चंचलाचित्तः द्रव्याणांस्वामीचस्यात् लाभे
शेलग्नस्थेलग्नेशेलाभस्थेशोभनकर्मादीर्घायुः क्षोणीनाथोराजाशुभाविभवयुतः कोविदोधीरश्च
मानवःस्यात् ॥ ५ ॥ लग्नेशेरिःफयातेव्ययनाथेलग्नगेसतिसर्वशत्रुःसर्वेषांजनानांसर्वेशत्रवोय

लाभेशेलग्नयातेतनुभवनपतौलाभसंस्थेसुकर्मादीर्घायुःक्षोणिनाथःशुभाविभव
युतःकोविदोमानवः स्यात् ॥ ५ ॥ लग्नेशेरिःफयातेव्ययसदनपतौलग्नगेसर्व
शत्रुर्बुद्ध्याहीनोनितांतंकृपणतरमतिर्द्रव्यनाशीविलोलः॥ इत्थंतातादिकानाम
पिजनुषितथाखेचराणांहियोगाद्वाच्यंहोरागमज्ञैस्तदनुतनुपयुग्भार्गवेराजपूज्यः६

स्येतिवायतोनिरंतरं बुद्ध्याहीनः बुद्धिरहितः कृपणतरमतिः अतिशयावित्तहीनबुद्धिः अतश्च
द्रव्यनाशीविलोलः निर्विचारीशीघ्रकारीचस्यात् इत्थमुक्तप्रकारेणजातकजन्मसमयेतातादि
कानामपिखेचराणांयोगात्फलंहोरागमज्ञैर्वक्तव्यम् अयमर्थः जातकस्यजन्मलग्नाद्दशमंभव

नंतातगृहंतदेवलग्नंप्रकल्प्यतदग्रिमान् क्रमेणधनादिभावान् परिकल्प्यतत्रलग्नभावेशयो
र्व्यत्ययास्थितिमवलोक्यलग्नाधीशेर्थगेचेद्धनभवनपतौ लग्नयातेर्थवान्स्यादित्यादिना उक्तो
दाहरणेनतातादीनांअर्थवत्त्वादिफलंहोराशास्त्रज्ञैर्वाच्यम् अथमंगलायशुभफले आदेशंसमाप
यंतितदनुतनुपयुक् भार्गवेलग्नेशयुक्तेशुक्रेत्रिकव्यतिरिक्तभावगइतिशेषात्तत्रजातोराजपूज्योभ

एवंस्वमत्यासुफलप्रबोधंश्रीजातकालंकरणंमनोज्ञम् ॥ वृत्तैरनन्तेशमितैर्निब
द्धंमयामुदेदैवविदामुदरम् ॥ ७ ॥ पुष्करालियवशागुणसाराजातकोक्तिरमलेव
मराला॥संस्कृताविहरतांभवतांमिमानसेऽतिसरलेसुकवीनाम् ।८॥वातिराज्यपूज्यश

ब्देनवांछितपदार्थानांसौलभ्यंध्वन्यते ॥ ६ ॥ एवमुक्तप्रकारेणमयागणेशेनस्वबुद्ध्याउदारंसा
रनिरूपणंमनोज्ञंपदपदार्थरुचिरंसुफलप्रबोधंस्फुटफलजनंकैदवज्ञानांप्रमोदायअनंतेशमितैर्द
शाधिकशतप्रमितैर्वृत्तैः श्रीजातकालंकरणंनिबद्धंविरचितं ॥ ७ ॥ अथस्वरचितग्रंथस्यकविम

नोरुचिरत्वंप्रार्थ्यतेमेममजातकोक्तिः भवतांपूज्यानांकवीनांअतिसरलेमानसेनिर्मलामराला
हंसीवविहरतांकथंभूताजातकोक्तिः पुष्करालयवशापुष्करमाकाशस्तदेवालयोयेषांतेपुष्कराल
याःग्रहाः तेषांवशाधीनाशुभाशुभसूचकग्रहोपयोज्याइत्यर्थःहंसीपक्षेपुष्करंजलंतस्यालयोमान
सं तद्वशातद्वर्तिनीत्यर्थःगुणसाराजातकगुणानांसारोपदेशोर्थोयस्यांसा हंसीजलेगुणसाराहित

हृद्यैः पद्यैर्गुंफितेसूरितोषेलंकाराख्येजातकेमंजुलेस्मिन् ॥ भावाध्यायःश्रीगणे
शेनवर्यैर्वृत्तैर्युक्तोऽष्टाभिरेषप्रणीतः ॥६॥ इतिजातकालंकारेषष्ठोऽध्यायः ॥६॥

गुणादैर्घ्ययुक्ता राजहंसास्तुतेचंचुरणौलोहितैःसिताइतिअभिधानात् अमलाशुद्धादोषरहिता
इत्यर्थः पक्षेऽमलानिर्मलेत्यर्थः संस्कृतामनोज्ञादिवाक्यपरिष्कृताहंसीपक्षोनिसर्गरुचिराइत्यर्थः
॥ ८ ॥ अथशालिन्याअध्यायंसमापयति हृद्यैः पद्यैरितिस्पष्टार्थः ॥ ९ ॥ इतिजातकालंकारेटी
कायांषष्ठोऽध्यायः ॥ ६ ॥

अथविशिष्टंस्ववंशंसंख्यापयन्ग्रंथसमाप्तौदेशकालविशेषंप्रख्यापयति त्रिभिः पृथवीशार्दूलवि क्रीडितैर्वृत्तैः अवनिमंडलेभारद्वाजकुलेनाम्नाकान्हजीकोविदः पंडितः अभूत्सकीदृशः जग तिलोकेमंडलज्योतिर्विद्देवाचार्यः स्युरुत्तरपदेव्याघ्रपुंगवर्षभकुंजराः सिंहशार्दूलनागाद्याः पुंसिश्रेष्टार्थगोचराइत्यभिधानात् श्रुतिस्मृतिविहारभूः प्रत्यहंश्रुतिस्मृतिप्रतिपादनद्वारातासां

अभूदवनिमंडलेगणकमंडलाखंडलःश्रुतिस्मृतिविहारभूर्विबुधमंडलीमंडनं ॥ प्र
चंडगुणगुर्जराधिपसभाप्रभातप्रभाकवींद्रकुलभूषणंजगतिकान्हजीकोविदः॥१॥

विहारभूमिः विबुधमंडलीमंडनंपडितशोभादायकइत्यर्थः प्रचंडगुणगुर्जराधिपसभाप्रभातप्रभा प्रचंडारिपुविजयशालिनोगुणाःसंधिविग्रहादयोयस्यसगुर्जराधिपः गुर्जरदेशाधिपः तस्यसभा याः प्रभातप्रभेवप्रभाप्रकाशकइत्यर्थः कवींद्रकुलभूषणंकविश्रेष्टसंदोहस्यप्रभावहम् ॥ १ ॥ तस्मात्कान्हजीकोविदात्परमंउत्कृष्टंसुतानांत्रयंबभूवतेषुज्यायान् ज्येष्टःग्रहज्ञतिलकः गणक

जा॰लं॰
॥ ४७ ॥

श्रेष्टः सुधीः श्रीसूर्यदासः अभवत्तदनुजः ततः पश्चाज्जातः श्रीमान् वेदवित् सर्वकलानिधिः सर्वकलाकुशलः गोपालनामा अभावत् तदनुजः श्रीमतां दैवज्ञानांच श्रेष्टः श्रीरामकृष्णोभवत् ॥ २ ॥ तत्र गोपालसूनुः गणेशः मार्गणरामसायकधारासंख्येशाके पंचत्रिंशदधिकपंचदशमितेशाकेन

भारद्वाजकुलेबभूवपरमंतस्मात्सुतानांत्रयंज्यायांस्तेष्वभवद्ग्रहज्ञतिकलः श्री सूर्यदासःसुधीः ॥ श्रीमान्सर्वकलानिधिस्तदनुजोगोपालनामाभवच्छ्रीमद्दैववि दांवरस्तदनुजःश्रीरामकृष्णोभवत् ॥२॥ शाकेमार्गणरामसायकधरा १५३५सं ख्येनभस्येतथामासेब्रह्मपुरेसुजातकमिदंचक्रेगणेशःसुधीः । छंदोलंकृतिकाव्यना टककलाभिज्ञःशिवाध्यापकस्तत्रश्रीशिवसंमुदेगणितभूर्गोपालसूनुः स्वयं ॥३॥

भस्येभाद्रपदमासेब्रह्मपुरेसूर्यपुरेइदंसुजातकंशोभनंजातकंश्रीशिवाख्यविदः प्रमोदायचक्रेकृतवान् कथंभूतोगणेशः शिवाध्यापकः शिवोअध्यापक उपाध्यायोयस्यछंदोलंकृत्यादिवित्ः छं

टी॰
॥ ४७ ॥

दांसिमात्रावर्णभेदभिन्नानिवृत्तानिअलंकृतयः उपमाद्यालंकाराः काव्यानिगद्यादिभेदेनाद्विविधानिनाटकानिसंस्कृतप्राकृतभाषानिबद्धानिकलाश्चित्रकर्माद्याःगणितभूर्गणिताश्रयः सिद्धांतविदित्यर्थः ॥ ३ ॥ ४ ॥ अध्यायंपूरयति हृद्यैः पद्यैरितिस्पष्टार्थः ॥ ५ ॥ श्रीमच्छुक्ककुलेम

येपटिष्यन्तिदैवज्ञास्तेषामायुःसुखेशिवम् ॥ भूयात्कैरवकुंदाभासुकीर्तिःसर्वतोदिशम् ॥ ४ ॥ हृद्यैः पद्यैर्गुम्फितेसूरितोषेलंकाराख्येजातकेमंजुलेस्मिन् । वंशाऽध्यायःश्रीगणेशनवृत्तैर्युक्तोवेदैः शैलसंख्यःप्रणीतः ॥ ५ ॥

इति श्रीगणेशेनाविरचितजातकालंकारेसप्तमो ध्यायःसमाप्तः ॥ ७ ॥

हीयसियशः शुक्लीकृतेजातके आसीत्कृष्णदयाभरप्रमुदितः कृष्णोजयाद्यः कृती । तत्पुत्रेणाविभाविताातिरुचिरासज्जातकालंकृतिर्श्रीरेषाहरभानुनामतिमतांमोदायभूयाच्चिरं ॥ १ ॥ इति श्रीमच्छुक्लोपनामकहरभानुभाावितजातकालंकारटीकासमाप्ता ॥ श्रीकृष्णार्पणमस्तु ॥

इदं पुस्तकं कृष्णदत्त बलदेवदत्तेन
ब्रह्मानन्द नामक स्वकीय यंत्रालये
गोवर्धनरामस्याज्ञानुसारेण मुद्रयित्वा प्रकाशिता
पुस्तक मिलने का ठिकाना कुंजगली पश्चिम फाटक पर
गोवर्धनराम की दुकानपर मिलेगा

पुस्तक मिलने का ठिकाना

कृष्णदत्त बलदेवदत्त बंबई बुकसेलर

चांदनीचौक Benares

